" विदितनिगमसीम्ना वेङ्कटेशेन तत्त-
द्द्रुहुसमयसमक्षं बद्धजैत्रध्वजेन ।
प्रतिपदमवधानं पुष्यता सात्त्वताना
परिषदि विहितेय पञ्चकालस्य रक्षा ॥"

इति पद्येन विशदयति श्रीमान् वेङ्कटनाथ[1] । भगवद्रामानुजमुनिभि अनुगृहीतस्य नित्यग्रन्थस्य निश्शेषतो विवरणम्, तत्रानाविष्कृताना श्री-भाष्यकार-तच्छिष्यवर्गाणाम् अभिमतत्वेन निगमान्तार्येण निर्णीताना च पाञ्चकालिककृत्याना[2] प्रपञ्चन च ग्रन्थस्यास्यापरो निबन्धनोद्देश इति च निश्चीयते । अस्य ग्रन्थस्यावतरणे हेत्वन्तराणि चाग्रतो दृश्यन्ताम् ।

एतदागमावलम्बिन पण्डिता पाञ्चरात्रशब्दस्य नैकविधानि निर्वचनानि निर्दिशन्ति । तत्र चेमानि कानिचन प्रधानानि प्रमाणवचनानि—

(१) रात्रयो गोचरा पञ्च शब्दादिविषयात्मिका ।
महाभूतात्मका वात्र पञ्चरात्रमिदं तत ॥
अवाप्य तु परं तेजो यत्रैता पञ्च रात्रय ।
नश्यन्ति पञ्चरात्र तत् सर्वाज्ञानविनाशनम् ॥ (विष्णुसहिता)

(२) पञ्चायुधाशास्ते पञ्च शाण्डिल्यश्चौपगायन ।
मौञ्ज्यायन कौशिकश्च भारद्वाजश्च योगिन. ॥
पञ्चापि पृथगेकैकं दिवारात्रं जगत्प्रभु ।

[1] स्वपक्षात् परपक्षादपि सर्वधर्मनिरासकरूपापाय समुपनत इति, तदपायात् पञ्चरात्रशास्त्रस्य रक्षणमावश्यकमासीदिति च ग्रन्थस्य नामान्ते योजितो रक्षाशब्द. सम्यगावेदयति ।

[2] दृश्यन्ता ५२ पुटे "तथाहि—भाष्यकाराव्यवहितशिष्यै वगिवशेश्वरै * * *" इत्यादीनि वाक्यानि । आगम-मन्त्र-तन्त्र-तन्त्रान्तराभिधेषु चतुर्षु सिद्धान्तेषु मन्त्रसिद्धान्तमवलम्ब्य नित्यग्रन्थ प्रणिनाय भगवान् भाष्कार ।

अध्यापयामास यतस्ततस्तान् मुनिपुङ्गवान् ।
शास्त्र सर्वजनैर्लोके पञ्चरात्रमितीर्यते ॥ (ईश्वर० स० २१)

(३) पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि ।
तत्सन्निधौ समाख्याऽसौ तेन लोके प्रवर्तते ॥ (पाद्म स० ज्ञान १)

(४) तत्परव्यूहविभवस्वभावादिनिरूपणम् ।
पाञ्चरात्राह्वयं तन्त्रं मोक्षैकफललक्षणम् ॥ (अहिर्बुध्न्य स० ११)

रात्रम् अथवा रात्रिरिति शब्दस्य ज्ञानार्थ एवमुपकल्प्यते नारदपञ्चरात्रे—"रात्र च ज्ञानवचन ज्ञान पञ्चविध स्मृतम् । तेनेद पञ्चरात्रं हि प्रवदन्ति मनीषिण" इति। इद तत्र प्रथमरात्राख्येऽध्याये प्रतिपादित वचनम् । पञ्चविधानि रात्राणि ज्ञानानि यस्मिन्निति नारदपाञ्चरात्रीया पञ्चरात्रव्युत्पत्तिरियम् आदावुदाहृत विष्णुसहितावचनोपपादित निर्वचन निकाममवष्टम्भयति। पञ्चायुधानाम् अशत्वेन परिगण्यमानेभ्य पञ्चभ्य शाण्डिल्यादिमुनिपुङ्गवेभ्य पञ्चभिरहोरात्रै परमेण पुसा नन्वस्य प्रागध्यापितत्वात् 'पञ्चरात्रम्' इति नाम्ना सर्वत्र शास्त्रमिद प्रथितमिति नवीना श्रीएम्बार्प्रभृतय पण्डिता अभिप्रयन्ति । अतिप्राचीनत्वेनावगम्यमानेषु पाञ्चरात्रसहिताग्रन्थेषु अन्यतमेन अहिर्बुध्न्यसंहिताग्रन्थेन यदुपपादित तत्परव्यूहेतिवचनेन पञ्चरात्रशब्दस्य निर्वचन तदेव सुतरा साधीय इत्याधुनिकप्रणाल्या विचारणपरस्य श्रीभट्टाचार्यादिविमर्शकवर्गस्य भवत्याशय ।[1]अभिगमनम्, उपादानम्, इज्या, स्वाध्याय, योग इति पञ्चाना भगवत्कैङ्कर्यरूपाणा कर्मणा प्रत्यहमनुष्ठानार्थ प्रतिनियता पञ्च काला शास्त्रेऽस्मिन् यत सन्ति सविभक्ता, तत इदं नामेति नातिविचारितविषयतत्त्वा केचित् कथयन्ति । "पञ्चकालरतश्चैव

[1] दृश्यता बरोडाराजकीयैर्मुद्रिताया जयाख्यसहिताया उपोद्घात ।

पञ्चरात्रार्थवित् तथा। विष्णुतत्त्वं परिज्ञाय एकं चानेकभेदगम्" इति जयाख्यवचनं तदिदम् असदिति विशदयति। यद्यभिगमनादिपञ्चकर्मणाम् अनुष्ठानाय विहितान् पञ्च कालानेव निर्दिशेत् पञ्चरात्रमिति संज्ञा, तर्हि पञ्चकालरत इति, पञ्चरात्रार्थवित् इति पञ्चकाल-पञ्चरात्रशब्दयोर्विभिन्न प्रयोगो नैव समञ्जस स्यात्, यतस्तद्वचनमेव तयो शब्दयोर्विभिन्नार्थत्वं व्यनक्ति। किञ्च विधिनियमितानि विविधभगवत्कैङ्कर्याणि अनुरुध्यैव दिनमेकं पञ्चधा विभक्तम्, न तु कालस्यान्यथा पृथग्विभागस्यास्त्यवकाश इति स एव ग्रन्थ साधु निर्धारयत्यपरत्र। यथा—"एकस्यैव हि कालस्य वासरीयस्य नारद। आप्रभातान्निशान्तं वै पञ्चधा परिकल्पना। पृथक् कर्मवशात् कार्या न काला बहव स्मृता" (जयाख्य० २२-२५, २६) इति। अतो हेतो· पञ्चापि वासरीया विभागा, कालेपु नेषु वैधत्वेन प्राप्ताः पञ्च धर्मा वा पञ्चरात्रशब्दस्याकिञ्चित्करा निर्वचनविषय इति निश्चिनुम। साङ्ख्य-योग-वैशेषिक-न्याय-मीमासाख्यानि पञ्च इतराणि शास्त्राणि यत्र रात्रीयन्ते (अदृश्यानि भवन्ति) इति या व्युत्पत्ति पाञ्चरात्रशब्दस्य पाद्मानुसारेण प्रकल्प्यते सापि क्लिष्टकल्पनेति, न ह्यार्या आर्जवावलम्बिनस्ताम् अभिनन्देयुरिति चाभिप्रयन्ति केचन विचक्षणा विमर्शका। परञ्च—पूर्वनिर्दिष्टस्य शतपथब्राह्मणमन्त्रस्य पूर्वतन एष "पुरुषो ह नारायणोऽकामयत्" इति मन्त्र पुरुषसूक्ते नारायणोपनिषदि च प्रतिपादितस्य नारायणस्य स्वरूपमेव निरूपयतीति, स्वात्मनैव तेनाविर्भाविताना पर-व्यूह विभवान्तर्याम्यर्चाख्याना पञ्चाना मूर्तीना स्वरूपनिरूपकपरं भगवच्छास्त्राख्यं पाञ्चरात्रशास्त्रं स एव प्रणीतवानिति,[1] शतपथब्राह्मणोक्तरीत्या स एव यज्ञरूपधर. पाञ्चरात्रसत्र-

[1] सदागममयात तस्मात् केवलाद्दिव्यशासनात्।
निर्ममे सारमुद्धृत्य स्वय विष्णुरसङ्कुलम्॥
तत्परव्यूहविभवस्वभावादिनिरूपणम्।
पाञ्चरात्राह्वय तन्त्र मोक्षैकफललक्षणम्॥ (अहिर्बु ११-६२, ६३).

पुरुष[1] स्वय समपद्यत इति च श्रेडरमहाशय कथमप्यभिप्रैति[2]। कालपञ्चकस्य च, पञ्चसु कालेषु द्वितीयाधिकारे प्रतिपादितेषु निर्वर्तनीयस्य नित्यकृत्यपञ्चकस्य च निर्णयपर शास्त्रमेव पाञ्चरात्रशब्दप्रतिपाद्यमिति निगमान्तगुरुभिरेव प्रथमाधिकारस्य निगमनावसरे निर्णीतमस्ति। यथा—

"पञ्चकालव्यवस्थित्यै वेङ्कटेशविपश्चिता।
श्रीपाञ्चरात्रसिद्धान्तव्यवस्थेय समर्थिता॥" इति।

पञ्चरात्रशास्त्रस्य वेदस्येव सर्वविद्याभ्योऽपि सर्वधा चिरन्तनत्वं तच्छास्त्रप्रतिपत्तिमद्भि सभाव्यते। आधुनिका चारित्रतत्त्वविमर्शनपरा विद्वासश्च शास्त्रमिद क्रिस्तुजन्मत प्राय शताब्दाना चतुष्टय्या पूर्वमेव बहुभिर्ज्ञातमिति, तत्सम्प्रदायश्च वासुदेवपरायणैस्तत्र तत्र प्रवर्तित इति च सहेतुकमुपपादयन्ति। क्रिस्तुत प्राक् चतुर्थ्या शताब्द्या स्थितवता पाणिनिना भगवान् वासुदेव 'वासुदेवार्जुनाभ्या वुन्' इति सूत्रेण सूचित इति, तत्समयेऽपि वासुदेवाराधकाना सद्भावस्य तदेतत ज्ञापकमिति, स च वासुदेवशब्द. चतुर्षु व्यूहेष्वन्यतमं भगवन्तमेव निर्दिशति न वसुदेवसुत श्रीकृष्णमिति, वुन्प्रत्ययविधानवैयर्थ्य परिजिहीर्षतो भगवत्सज्ञेयमिति प्रतिपादितवतः पतञ्जले महाभाष्यवाक्य प्रमाणमस्येति च स्वसिद्धान्तस्य ते ह्युपकल्पयन्ति हेतून्। "तद्धि वासुदेवाख्य परं ब्रह्म" इति यत् श्रीभाष्ये (२-२-४१) अभिहितं तदपि नूनमेतद्वासुदेवपरमिति निरूपयति वचनम्। शतपथब्राह्मणे, ऐतरेयब्राह्मणे च सात्त्वतविषयस्य (पञ्चरात्रपरायणाना निर्देशकासु संज्ञास्वन्यतमस्य) प्रयोगोपलम्भात्, पाञ्चरात्रशास्त्रस्यातिचिरन्त-

[1] यज्ञरूपधर देव यजते स्वात्मनैव य।
तेन सर्वे कृता यज्ञा भवन्तीह महात्मना॥ (अहिर्बु ३७–३९)

[2] Introduction to the Pancaratra of Prof Schrader, P 25,

नत्वनिर्णयविषये तादृशेषु स्थलेषु विद्यमानस्तादृशो निर्देशोऽपि नितरा भवति गरीयान्। अद्योपलभ्यमानेषु ब्राह्मणाख्येषूपनिषद्ग्रन्थेषु कालैर्बहुतिथै प्रवृत्तेषु नन्विदम् ऐतरेयब्राह्मणम् अन्यतम इति, तथाविधे प्रबन्धे च सात्त्वताना नामनिर्देशो नाम निस्सशयतया पाञ्चरात्रसंप्रदायस्य क्रिस्तुजननात् प्राक् दशम्या शताब्द्या ततोऽपि पूर्वं वा प्रचारमिह देशे निरूपयतीति च विषयस्यास्य विमर्शनपरा विश्वसन्ति। अस्मदीया साम्प्रदायिकास्तावत् यथा कथञ्चित् 'चतुर्वेदसमन्वित पञ्चरात्रानुशब्दितं महोपनिषदमिद भक्तानुकम्पया भगवता हरिणा सगृहीत' वेदा इव उपनिषद इव चानादिकालप्रवृत्तमिति सविस्रम्भम् अभिप्रयन्ति।

स्वधर्मपरित्यागवादिना केषाचन स्ववर्गीयाणाम्, मृषावादमभिद्धता परकीयाना च कक्ष्ययो द्वितीयाया श्रीभाष्यादिषु प्रपञ्चितै प्रमाणै परिहृतत्वात्, स्ववर्गीयै कैश्चन अविचारितोपात्तानाम् आशयाना निरसनाय प्रवृत्तोऽय ग्रन्थ त्रिभिरधिकारै परमैकान्तिनामावश्यकान् पाञ्चकालिकधर्मान् सप्रमाणमुपदिशति। प्रथमाधिकारे भगवन्मन्दिरेषु भगवतोऽर्चारूपिण पूजानिर्वर्तनोपयोगिना विधीना विविधाना विवरणपुरस्सरं आगमसिद्धान्तमन्त्रसिद्धान्त-तन्त्रसिद्धान्त-तन्त्रान्तरसिद्धान्तभेदेन पञ्चरात्रस्य चतुर्विधत्वं प्रदर्श्यते। एते च सिद्धान्ताश्चत्वारोऽपि पुन स्वयव्यक्तसिद्धान्त, दिव्यसिद्धान्त, सैद्धसिद्धान्त, आर्षसिद्धान्तश्चेति संज्ञान्तरैरपि व्यवह्रियन्ते। चतुर्विधमपीद पञ्चरात्र वेदमूलाशस्य भवत्युपबृह्मणम्[1]। किञ्च भगवता प्रोक्तं पञ्चरात्रशास्त्रमनुसृत्य प्रवृत्तासु शतद्वयाधिकपाञ्चरात्रसहितासु[2] काश्चि-

[1] "चतुर्विध पञ्चरात्रम्—आगमसिद्धान्त, दिव्यसिद्धान्त, तन्त्रसिद्धान्त, तन्त्रान्तरसिद्धान्तश्चेति। चतुर्विध चेद वेदमूलभूताशस्य उपबृह्मणम्। तदभिप्रायेण ह्युक्त महाभारते—'महतो वेदवृक्षस्य मूलभूतो महानयम्' इत्यादि।" इति न्यायपरिशुद्धौ।

[2] जर्मन्देशीयबिदुषा श्रेडर्महाशयेन आङ्गलभाषाया विरचिते पाञ्चरात्रागमोपोद्घा-ताख्ये विमर्शग्रन्थे दशाधिकद्विशतसङ्ख्याका पाञ्चरात्रसहिताग्रन्था तत्तन्नामनिर्देशादिपूर्वक सन्ति

द्विव्या इति काश्चित् सात्त्विका इति, काश्चित् राजसा इति, अथ काश्चित् तामसा इति चोच्यन्त इति। चातुर्विध्य तासामपि विशदयन्[1], कतमत्संहिता अनुरुध्य केषु केष्वालयादिषु पूजादिकमनुष्ठेयमिति चाधिकारोऽयं निरूपयति नियमान्। अत सिद्धान्तानाम्, संहितानाम्, शास्त्राणाम्, आलयानाम्, पूजाद्यधिकारिणाम्, विम्बानाम् पूजाविधीना चासाङ्कर्यमावश्यकमिति निरूपयन्, सुव्यवस्थितस्य तत्तद्वर्णाश्रमसमुचितस्य पाञ्चरात्रिकपाञ्चकालिक-समाराधनस्य वैधत्व च स्थापयन्, तद्विधायकपाञ्चरात्रागमस्य कार्त्स्न्येन प्रामाण्यमपि प्रथमाधिकारे प्रदर्शयति। द्वितीयाधिकारे कर्मानुरोधेन काल-विभागान् अहोरात्रस्य पञ्चधा विधाय[2], ब्राह्मान्मुहूर्तादारभ्य आनिशान्तं परमैकान्तिभिरनुष्ठेयानि भगवत्कैङ्कर्यभूतानि अभिगमनोपादानेज्या-स्वाध्याय-योगाख्यानि पञ्च कृत्यानि सप्रमाणं प्रतिपादयति। अत्रैव श्रीभाष्यकार-

निर्दिष्टा। आगमग्रन्थानाम् आकरविवृतिरूपस्य तादृशकोशस्य (Introduction to Pāncarātra and Ahırbudhnya Samhıtā) रचनेन पाञ्चरात्राभिमानिना मन्ये, श्रेडर्महाशयेन बहूपकृतम्।

[1] (1) सात्त्वत-पौष्कर-जयाख्यादयो दिव्या, (2) ईश्वर-भारद्वाज-सौमन्तवादय सात्त्विका, (3) सनत्कुमार-पद्मोद्भव-शातातपादयो राजसा, (4) पञ्चप्रश्न-शुकप्रश्न-तत्त्वसाग-रादयस्तामसा संहिता इति विभक्ता सन्ति। सिद्धान्ता एते प्रयोजनविशेषापेक्षया स्वयव्यक्त-सैद्ध-दिव्यार्षभेदेन वा, वेदसिद्धान्त-दिव्यसिद्धान्त-तन्त्रसिद्धान्त-पुराणसिद्धान्तभेदेन वा विभज्यन्ते। क्षेत्राणि च स्वयव्यक्त-दिव्य-सैद्ध-मानुषभेदेन चतुर्धा। पाञ्चरात्रपूजाक्रमश्च वैदिक-तान्त्रिक-श्रौत-मिश्रभेदेन चतुर्विध। तत्प्रतिपादक शास्त्रमपि स्वयव्यक्त-दिव्य-मुनिभाषित-मानुषभेदेन चतुर्धा। [स्वयव्यक्तं शास्त्र मूलागम। दिव्य नाम साक्षात् भगवत्प्रणीतं ब्रह्मरुद्रादिभि प्रवर्तितम्। मुनिभाषित तु सात्त्विक-राजस-तामसात्मना त्रिधा— भगवत श्रुतार्थस्य केवलप्रतिपादक सात्त्विकम्। एकदेशतो भगवत श्रुत स्वयोगमहिमसिद्ध चावशिष्ट राजसम्। स्वयोगमहिमोपलब्धार्थैरुपनिबद्ध तामसम्। दिव्य-मुनिभाषिताभ्या व्यतिरिक्त मनुजै प्रणीत मानुषम्।]

[2] "एकस्यैव हि कालस्य वासरीयस्य नारद। आप्रभातान्निशान्त वै पञ्चधा परि-कल्पना। पृथक् कर्मवशात् कार्या न काला बहव स्मृता॥" इति जयाख्यसंहिता।

नित्यग्रन्थे सम्यगनुपलभ्यमानाना पाञ्चकालिकाना धर्माणा सर्वेषामपि तदभिमतत्त्वनिर्धारणपर सिद्धान्तश्च सोपपत्तिकमस्ति निरूपित । अपि च स्मार्ताना पाञ्चरात्रिकाणा च कर्मणा[1] परस्पर विसंवाद समुपनमेदिति वादम्, कुलक्रमेणागमसिद्धान्तमनुरुध्य पाञ्चरात्रिक भगवत्सेवादिकम् अनुष्ठेय कर्म त्रयीमार्गानधिकारिणाम् एकान्तिना च भवतु, अस्तु चेतरेषा त्रयीमार्ग एवेति विवदतामाशय चास्मिन्नधिकारे निरासयति[2] । तृतीयोऽधिकार पूर्वाधिकारविहितानि पञ्चकालकृत्यानि सर्वाणि सप्रमाणं प्रपञ्चयति । निद्रान्त-प्रबोध-हरिकीर्तन-शौच-स्नान-सन्ध्योपासन-पितृतर्पण-ब्रह्मयज्ञोपादान-भगवत्पूजादीना विविधाना नित्यानुष्ठानाना यथावद्विवरणमत्रास्ति विधिनिषेध-प्रमाणप्रदर्शनै प्रतिपादितम् ।

सत्स्वपि शतद्वयाधिकसङ्ख्याकेषु पञ्चरात्रसहिताग्रन्थेषु, श्रीनिगमान्तगुरो सात्त्वत-पौष्कर-जयाख्यनामसु त्रिष्वेव सुमहती सभावना । सहितान्तराण्यपि — पारमेश्वर-पाद्म-भारद्वाज-भार्गव-वासिष्ठ-विहगेन्द्रेश्वराहिर्बुध्न्यादयो बह्वच संहिता — यद्यपि प्रमाणत्वेन तत्र तत्र ग्रन्थेऽत्र सन्त्युपात्तानि, तथापि मूलवेदानुसारेण साक्षाद्भगवत्प्रणीतास्तास्तिस्र इति कृत्वा, तासु मन्महे प्रावर्तत महान् पक्षपातोऽस्य । "सात्त्वताद्य त्रिक चैतत् व्यापक मुनिसत्तम" इति ईश्वरसहितावचनम्, "स्वयव्यक्ते तथा दिव्ये दिव्यशास्त्रोक्तवर्त्मना । मूलागमसमेतेन मुख्यैर्भागवतै सदा" इति संहितात्रयस्य दिव्यत्वोपपादक जयाख्यसहितावचनं च श्रीनिगमान्तगुरोराशयस्योपष्टम्भक भवतीति भावयाम । तिसृणामासा दिव्यत्वस्य पारम्यस्य च प्रमापकत्वप्रतिपादनार्थमेव सात्त्वत-

[1] केवल त्रयीनिष्ठा केचन, केचन चागमनिष्ठा ।

[2] मूलवेदाधिकारिणा (एकायनशाखाध्येतॄणाम्) आगमसिद्धान्तेऽप्यस्त्यधिकार । एत एव पाञ्चरात्रस्य मुख्याधिकारिण । सिद्धान्तान्तरेषु त्रयीनिष्ठानामपि तत्तदुक्तदीक्षामूलतो विद्यतेऽधिकार ।

पौष्कर-जयाख्यसंहितानां विवरणरूपतया क्रमेण तत्तत्संहितामार्गावलम्बिनो महान्तः ईश्वर-पारमेश्वर-पाद्माख्यास्तिस्रः पृथक् संहिताः प्रणिन्युरिति साम्प्रदायिका अभिप्रयन्ति। अथ नैष्ठिकानां परमैकान्तिनां नित्यानुष्ठानविधिनिर्णायकत्वेन भगवतो भाष्यकारस्य नित्यग्रन्थविवरणद्वारा तस्याव्यवहितशिष्यस्य वङ्गिवशेश्वरस्य भूयस्यः कारिकाः, तथा नञ्जीयरिति नामान्तरेण प्रथितस्य नारायणमुनेः पञ्चकालकल्पनाविधायिकाः कारिकाश्च ग्रन्थेऽस्मिन् सन्ति भूरिशः उदाहृताः[1]।

नारायणैकपरायणैः परमादरणीयं पाञ्चरात्रशास्त्रमिदम् इति साम्प्रदायिकानामाशयः। पाञ्चकालिककृत्यैः परमपुरुषमेव ये सन्ततमुपासते त एव परमैकान्तिनः। परमैकान्तिशब्दस्यार्थविवरणावसरेऽस्य ग्रन्थस्य तृतीयाधिकारे निगमान्तगुरुभिः परमैकान्तिशब्दस्य निर्वचनमेवमेवास्ति विहितम्[2]। अनन्यदेवताकत्वमेव परमैकान्तिनां परमा निष्ठा। "चतुर्विधा मम जना भक्ता एव हि ते श्रुताः। तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः" इति खलु महाभारतमावेदयति।

"कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।"
"अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।"
"जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥"
"तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च।
मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः॥"

[1] श्रीवत्साङ्कमिश्रस्य अभिगमनसारः, श्रीभट्टपराशरस्य नित्यग्रन्थः, वङ्गिवशेश्वरस्य कारिका, नारायणमुनेः नित्यार्चनकल्पः इत्येतेषां ग्रन्थानां विशिष्य वङ्गिवशेश्वरकारिकाग्रन्थस्य च कृतमुपबृंहणम्। [वङ्गिवशेश्वरः श्रीरङ्गनारायणाचार्याख्यया च व्यपदिष्टः श्रीभाष्यकाराणाम् अव्यवहितशिष्यः पञ्चकालप्रक्रियया नित्यकर्मसंग्राहकः प्रधानः पुरुषः।]

[2] दृश्यतां श्रीपाञ्चरात्ररक्षायां १३९ पुटः।

"मत्कर्मकृत् मत्परम मद्भक्त सङ्गवर्जित ।
निर्वैर. सर्वभूतेषु य स मामेति पाण्डव ॥"
"बहूना जन्मनामन्ते ज्ञानवान्मा प्रपद्यते ।
वासुदेव सर्वमिति स महात्मा सुदुर्लभ ॥"
"आब्रह्मभुवनाल्लोकात् पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥"

इत्यादिभि. भगवन्मुखोद्गतैरेव विश्वेषामपि विश्वसनीयैर्वचनै प्रतिपादितरीत्या परस्मिन् पुरुष एव नैरन्तर्येण निवेशितमतीना पाञ्चरात्रपरायणाना परमैकान्तिना तस्यैव भगवतो मुखात् प्रवृत्त पाञ्चरात्रशास्त्र नित्यकर्तव्यसद्ध-र्मोपदेशक मुक्तानामिव स्वयप्रयोजनभूत च भवतीति निरूपणार्थमेव निगमान्तगुरुरो एतद्ग्रन्थनिबन्धने समुद्यम ।

ग्रन्थस्यास्य सपरिष्कार मुद्रणाय प्रवृत्तैरस्माभि का प्रक्रिया आदृता इति च किञ्चिन्निवेदयाम । ग्रन्थेऽस्मिन् प्रत्यधिकारं विषयाणा नैकविधाना तत्र तत्र विभागा सन्ति विहिता , ततस्तत्तदुचितानाम् विषयनिर्देशा-नाम् 'मङ्गलाचरणम्', 'पञ्चरात्राणा प्रमाणम्', 'चत्वार सिद्धान्ता ', 'सिद्धान्तानाम् असाङ्कर्यस्थापनम्' इत्येवमादीना योजनानि च तत्र तत्र पुटाना पर्यन्तेषु यथामति सन्ति निर्वर्तितानि। ग्रन्थस्यास्य पठने प्रवृत्तिमता विषयविभागरूप एष परिष्कार परमुपकुर्यादिति वयमिममुद्यममङ्गचकुर्म ।

अस्य प्रबन्धस्य सस्कारायादृतेषु कठिनेषु कार्येषु पाठशोधनमप्यन्य-तमम् । विशेषशोधनार्थं विभिन्नेभ्य स्थलेभ्य कोशा एकादश श्रीपाञ्चरात्र-रक्षाया सम्पादिता । एकादशस्तु नागरलिपिमुद्रितो य उपोद्घातस्योपक्रमे सूचित स गुणै नैवास्मदभिप्रेतार्थसमर्थनाय प्रकल्पेतेति अन्ततोऽनादृत· । अवशिष्टेषु दशसु कोशेषु ग्रन्थाक्षरैस्त्रय·, आन्ध्रलिपिभिरेक इति चत्वारो

मुद्रिता गृहीता ग्रन्था । ग्रन्थाक्षरमया तालपत्रलिखिता प्राचीना षट् च परस्तात् सम्पादिता । ग्रन्थाक्षरै प्रभिन्नेषु समयेषु मुद्रितास्त्रयोऽपि ते कोशा· प्राय पाठत समाना । आन्ध्राक्षरमुद्रितस्तु तेभ्य किञ्चिदिव विभिन्न कियान् शुद्धश्च । तालपत्रलिखितेषु षट्सु कोशेषु "घ" सञ्ज्ञकस्य पाठत कालतश्च गरिष्ठत्वमालोच्य तदीया पाठा एव भूयसास्माभिरादृता इति पूर्वमुक्तम् । तथास्य ग्रन्थस्य शोधनाय सम्पादितानां पुस्तकानाममीषा विषयान् काश्चनेह विवृणुम. । एतेषु "च" कोश एवान्ध्राक्षरमय । तदितरे सर्वेऽपि नव ग्रन्थाक्षरमया ।

१ "क" संज्ञित. कोश: विलम्बिवत्सरे (कलौ ४९९९-क्रैस्तवे-१८९९) मुद्रित· । इदमेव प्रथमोपलब्ध पुस्तकम्[1] । 'शखपुर राघवाचार्य-परिशोधितपुस्तकानुसारेण मुद्रित:' इति कोशस्य मुखपत्रे मुद्रितमास्ते । अनन्तर सम्पादितानां पुस्तकान्तराणा परामर्शानन्तर प्रथमोपलब्ध पुस्तकमिदम् अपभ्रंश-बाहुल्यविषयेऽपि प्रथमगणनीयमित्यवगतम् ।

२ "क (अ)" संज्ञित कोशोऽयं अडयार् पुस्तकभाण्डागारात् उपलब्ध· । "क" कोशात् षोडशवर्षेभ्य. पूर्व चित्रभानुवत्सरे (कलौ ४९८३-क्रैस्तवे १८८२-८३) चेन्नपुर्या व्यवहारतरङ्गिणीमुद्रालये मुद्रित· । 'शखपुर राघवाचार्यै परिष्कृतशुद्धप्रतिवत् सम्यक् परिष्कृत्य मुद्रितोऽय ग्रन्थ:' इति पूर्वस्मिन् पुस्तक इवात्रापि मुखपत्रे मुद्रितमास्ते । इत किञ्चिदूनवर्षद्वयात् प्राक् मुद्रिते "झ" सञ्ज्ञिते (अन्ततो निर्दिश्यमाने) कोशे शोधनपत्रेषु अन्तत: सूचिता शोधनांशा· प्रायेणात्र साधिता दृश्यन्ते । क्वचित् "झ" कोश "क" कोश चानुरुध्यैव मुद्रितोऽय कोश इति समालोच्य, नास्य पृथक् पाठ-भेदादिबोधक किमप्यकारि सूचनमस्मिन् ग्रन्थे । वयमत. प्रायेण "झ" कोश-स्थाने पुस्तकमिद परिगणयाम ।

३. "ख" संज्ञित कोश· मद्रपुरराजकीयहस्तलिखितपुस्तकभाण्डा-गारात् प्राप्त । D 5280 अङ्कचिह्नित. । शोभनैरक्षरैर्युक्त· । द्विनवतिवत्सरेभ्य.

[1] इदं तोट्टाल श्रीवेणुगोपालाचार्यस्य । मदीयमपि तथाविधमेव पुस्तकमन्यद्भवति । भेदरहितत्वात् एतयोरेकत्वमुपकल्प्यते ।

प्राक् तिरुमलै वेदान्तरामानुजाचार्याख्येन केनचित् तालपत्रेषु दिवसै द्वादशभिरेव विलिख्य समापितोऽय कोश इति ज्ञायते । '४९९० कल्यब्दे सौम्यवर्षे कार्तिकमासस्य पञ्चदशेऽह्नि लेखनमारभ्य तस्य मासस्य सप्तविंशे दिवसे एकादशीतिथौ वृषभलग्ने लेखनसमापन कृतम्' इति, 'श्रीपाञ्चरात्ररक्षा लिखिता श्रुत्यन्तलक्ष्मणाख्येन । पठितव्या द्विजवर्यै दातव्या तत्समक्षमेवेयम्' इति च तेनैव लेखकेन पुस्तकस्यावसाने विलिखितमास्ते । यद्यप्ययमक्षरतः सुन्दरः, तथापि पाठत एष न विस्रम्भमर्हति । अस्मिन् परिदृश्यमानान् दोषान् मुद्रितपुस्तकस्थैः तै' सम विन्यस्य विषये विमृश्यमाने, कोश एष एव स्वमुद्रिताना प्रायशो मातृकात्वेन भूतपूर्वै' मुद्रापकैः स्वीकृत स्यादिति सभावयाम । यद्यप्यामूलात् पुस्तकमिदम् अशिथिल समग्र चास्ते, तथापि त्रिचतुरेषु स्थलेषु लेखकप्रमादेन वा एतन्मूलभूते मातृकाकोशे समुपनतेन वैकल्येन वा कतिचन पङ्क्तयो दृश्यन्ते विसृष्टा ।

४. "ग" सज्ञित. **कोश** एष च तालपत्रेषु सुव्यक्त लिखितो मद्रपुरराजकीयहस्तलिखितपुस्तकभाण्डागारसबन्धी, 5281 (M 49-1) अङ्कचिह्नित । समग्रोऽयम् । केन कदा लिखित इति नावगम्यते । "ख" कोशस्य समानवयस्को वा तत किञ्चिदर्वाचीनो वा स्यादिति सभाव्यते । अस्य च "ख" कोशस्य च पाठरीत्या पार्थक्य न प्राय परिदृश्यते । अस्मिन् "इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य . . " इत्यादिक साम्प्रदायिक ग्रन्थसमाप्तिवाक्य क्वचिदप्यधिकाराणाम् अवसानेषु ग्रन्थावसाने वा न दृश्यते ।

५ "घ" सज्ञित **कोश** एष च तालपत्रमयो मद्रपुरराजकीयहस्तलिखितपुस्तकभाण्डागारादधिगत । R 4227 अङ्कचिह्नित । अतीव पुरातन । किञ्चिदूनवर्षशतकादर्वाक् लिखितयो' "ख" "ग" कोशयो पत्राणा लिपीना चावस्थितिम् अदसीयाना पत्राणामवस्था च सममेकत्र निरीक्षितवद्भिरस्माभि' कोश एष वर्षाणा शतत्रयेण तयो स्याज्ज्यायानिति विभाव्यते । दिष्ट्या न ह्यस्य दलानि कालेनैतावता घुणमुखै क्षतानि; न वा वयोवशात् विदीर्णानि । पाठत प्रशस्तमिममेव कोशमनुरुध्य श्रीपाञ्चरात्ररक्षायाः पाठपरिष्कारे वयमभवाम प्रभविष्णवः । अत्र दृश्यमाना' साधुसमता पाठा सुबहवः पुस्तकान्तरेषु मुद्रितेष्वमुद्रितेषु च न विलोक्यन्ते ।

६. "ङ" सञ्ज्ञित कोश सुतरा पुरातन मद्रपुरराजकीयपुस्तकभाण्डागारादुपलब्धस्तालपत्रलिखित । M 34-3 अङ्कचिह्नित । पाठैर्भूयसा "घ" कोशसदृश । शैथिल्यम् अधिजिगमिषूणाम् अदसीयाना—क्वचित् क्वचित् विलुप्ताना च—दलाना रीतिमवलोकितवद्भिरस्माभि कोश एष "घ" सञ्ज्ञितादपि प्राचीनतर स्यादिति आलोच्यते । आरम्भे कोशस्यास्य कानिचन पत्राणि लुप्तानि, कानिचनान्ततश्च त्रुटितानि । अक्षराणि किञ्चिदिवास्पष्टानि । मुद्रापकान्तरैरदृष्टपूर्व वयोवशात् विशिष्य शैथिल्य प्रतीक्षमाणमिदं पुस्तक दिष्ट्या समुचिते समये दृष्टमस्माभि । साधुपाठा समुद्धृता अस्मादपि कोशात् ।

७ "च" संज्ञित[1] कोशो विंशतिवत्सरेभ्य पूर्व १९१९ क्रैस्तवाब्दे तूप्पुल् श्रीवेङ्कटाचार्येण बेङ्गळूर् नगरे आन्ध्राक्षरैर्मुद्रित । ग्रन्थाक्षरैर्मुद्रितेभ्यः पूर्वनिर्दिष्टपुस्तकेभ्यस्त्रिभ्योऽपि पाठरीत्या मुद्रणशैल्या च कोशोऽय कियानिव विशिष्यते । तत्र तत्र सन्दिग्धेषु बहुषु स्थलेषु सविमर्शमर्थनिर्वचनपूर्वक विषयपरिशोधनाय यद्यप्यस्य मुद्रापका श्रममावहन्निति न ज्ञायते, तथापि यावच्छक्ति आगमशास्त्रस्यास्य शोधनाय तै प्रवृत्तमिति अवगम्यते । महीशूरपुरादेव राजकीयपुस्तकभाण्डागारात् अस्मत्परिशीलनार्थ ये हि नाम कोशा आनीताः तेष्वेकोऽपि पुस्तकस्यास्यान्ध्रस्य मुद्रापकाणा दृष्टिपथमुपयात इति प्रतिभाति, यत सुबहु स्थलेषु तत्कोशस्था पाठा मुद्रितस्यान्ध्रपुस्तकस्यास्य पाठेभ्यो विसवदन्ति ।

८ "छ" संज्ञित कोश. सुस्पष्टैरक्षरैरन्वितो महीशूरपुरराजकीयपुस्तकभाण्डागारात् सपादित । तालपत्रमय. । २४९८ अङ्कचिह्नितः । समग्र । पाठैः अक्षरशुध्या च "घ" "ङ" कोशौ भूयसा अनुवर्तते । केन कदा लिखितोऽयमिति न ज्ञायते । अद्यैवास्य घुणभक्षणमारब्धम् । "घ" "ङ" कोशाभ्यामेतस्य लेखनकाल स्यादर्वाचीन इति प्रतिभाति ।

९ "ज" संज्ञितः कोशोऽयम् असमग्रः । महीशूरपुरराजकीयपुस्तकभाण्डागारात् उपलब्धस्तालपत्रलिखित । ३०२८ अङ्कचिह्नित । लेखनसमयलेखकनामादिकम् अस्यापि नोपलभ्यते । पुस्तकस्य स्वरूपम्, अत्र समुपनताना घुणक्षतादिशैथिल्यादीना रीतिम्, पाठक्रमादींश्च सम्यगभिवीक्षतवद्भिरस्माभिः

[1] एष कोश श्रीमता तोट्टाल राजगोपालाचार्याणा सविधात् सपादित ।

प्रायेण "घ" कोशस्य समकालिकतास्य अनुमीयते। "विस्तरेण चाह योगमन्ते दक्ष । तत्र चैष सार प्रोक्त । सर्वोपाधि . . . " इति[1] द्वितीयाधिकारान्तिमभागस्य किञ्चित् पूर्वं विद्यमानाया वाक्यपङ्क्तेरनन्तरम् अस्मिन् ग्रन्थलोप सजात. । अदसीयस्य पाठादिसौष्ठवस्यावलोकनेन अवशिष्टस्य एतदीयस्य नष्टाशस्यापि परामर्शे परमाकाङ्क्षा न समुत्पन्ना ।

१० "झ" **सज्ञित कोश**[2] श्रीपाञ्चरात्ररक्षाया· प्रथममुद्रित एष एवेति वयमेतावता 'जानीम'। वेळियनूर् शङ्खपुरम् श्रीराघवाचार्येण, कोन्दमूर् कोयिलिप्पुणि श्रीराघवाचार्येण च शोधित , कुम्भकोणम् तट्टै श्रीकृष्णमाचार्यप्रार्थनया माडपूषि श्रीपार्थसारथ्याचार्येण विक्रमसवत्सरे (क्रैस्तवेऽब्दे १८८०) चैत्रमासे मद्रपुर्यां व्यवहारतरङ्गिणीमुद्रालये मुद्रित· । षष्ट्यधिकवर्षदेशीयमिदमेव पुस्तक पूर्वनिर्दिष्टयो ग्रन्थाक्षरमयपुस्तकयो मुद्रणमूलम् आसीत् । एतन्मुद्रणे कृतयत्नै प्रथमतो य कमप्युपलब्ध कोशमनुरुध्य विनैव विमर्शश्रम वीतपरिशोधनोद्यम च ग्रन्थमुद्रणायारब्धमिति, अनन्तर च पुस्तकान्तरप्राप्त्या स्वविहितेषु मुद्रणेषु दोषबाहुल्यमवलोक्य पुटाष्टकपरिमित शुद्धिपत्रमन्तत सयोजितमिति च सदृश्यते । अपभ्रशबहुलस्यास्य कोशस्यान्ते योजित शोधनपत्रमपि अन्यत् शोधनपत्रमपेक्षते। "क" कोश· सर्वथा पन्थानमेतदीयमेवानुरुणद्धि, यत एष एव तन्मुद्रणस्य मूलमभूत् । अत्रान्ततो विद्यमानानि शोधनपत्राण्यपि "क" कोशमुद्रापकै नैव दृष्टानीति स्पष्टीभवति। तथापि श्रीपाञ्चरात्ररक्षाया प्रथमतो मुद्राक्षरारोपणोपनता प्रतिष्ठा श्रीशङ्खपुर राघवाचार्यप्रभृतय एवार्हन्ति ।

श्रीनिगमान्तगुरुभि पाञ्चरात्ररक्षाया सुबहुभ्यो ग्रन्थान्तरेभ्य समुद्धृत्योदाहृताना सर्वेषामपि प्रमाणवचनाना ग्रन्थस्यास्यावसाने काचन विस्तृता वर्णानुक्रमणिकास्ति सयोजिता, यत्र च प्रमाणभूताना सर्वेषामपि श्लोकार्धानाम् अन्येषामपि प्रमाणवाक्यानाम् आदिमा भागा सन्ति समुद्धृत्य मुद्रिता । एष चास्य परिष्कारायाहृतेषु अभिनवेषु समुद्यमेष्वन्यतम ।

[1] दृश्यताम् अस्य ग्रन्थस्य ७६ पुटः ।

[2] ग्रन्थ एष काञ्चीपुर तायार्सन्निधि वरदाचार्यस्वामिना सविधात् सपादित ।

अन्याम् अनुक्रमणिकाया तथोद्धृत्य सूचिताना प्रमाणवचनानाम् आकरकोशनामानि, कर्तृनामादीनि च तत्तद्वचश्चके मङ्केताक्षरै सन्ति सदर्शितानि, येषा च (सङ्केताक्षराणा) विशेषविवरणम् अपरयोस्तत पूर्वमायोजितयो अनुक्रमणिकयोरस्त्याविष्कृतम् । पाठाना संदिग्धविषयाणा च विमृश्य शोधनार्थ यावान् परिश्रम कालव्ययश्च समभूत्, किञ्चिदुच्चावचतया तावान् आकरग्रन्थानाम् अन्वेषणाय तत्तन्नामसग्रहाय चासीद्विनियोक्तव्य । एवमादृत्य च सुदुर्भरं क्लेशम, ग्रन्थान् काश्चन—अभिगमनसार, आचमननिर्णय, कालविधानम्, कालोत्तरम, भोजदेव-बलदेवाचार्यग्रन्था, सन्मार्गदीपिका, कृष्णकुल्प, प्रयोगपद्धतिरत्नावली, श्रीकरसंहिता इत्यादीन्—नैवोपलब्धुमशक्नुम । आदौ आकरग्रन्थानाम् अन्वेषणे सत्युपक्रान्ते, सुबहूना वचनाना मूलभूतग्रन्थाना तत्तद्ग्रन्थप्रकरणाना चाधिगमे महदेव विस्रम्भवैकल्यमजनि । इदमद्य महदस्माक प्रमोदस्थानम्, यदुत बलवतोऽस्मदुद्यमस्य समुचितफलत्वेन प्रमाणवचनानाम ऋतेऽतिपरिमितसङ्ख्याकेभ्यो वचनेभ्य सर्वेषामितरेषामुपलब्धा आकरा इति । ते च प्रमाणवचनादीना वर्णानुक्रमणिकाया सन्ति सयोजिता । ग्रन्थेऽस्मिन् उदाहृताना प्रमाणाकरसङ्ख्याना मध्ये प्रतिशतक पञ्चषा एवाकरा अभूवन् अनुपलब्धा इति च निर्देष्टु शक्यते ।

प्रपत्तिधर्माणा तत्त्वनिरूपणाय निक्षेपरक्षा प्रथमत प्रणीय,[1] ततश्च प्रपन्नजनैस्तदितरैश्च भागवतै प्रत्यहमनुष्ठेयाना भगवत्कैङ्कर्यरूपधर्माणा निरूपक पाञ्चरात्रशास्त्र नि श्रेयसकाङ्क्षिणाम् अनुजिहीर्षया व्याख्यातवान् श्रीवेदान्तगुरु, अनया रक्षया शास्त्र च तद्रक्षितवान् । पाञ्चरात्रशास्त्रं परम-

[1] "प्रपञ्चित चैतत् पूर्वस्मिन्नधिकारे निक्षेपरक्षादिषु च" इति ग्रन्थेऽस्मिन् तृतीयाधिकारस्यारम्भे दृश्यते । अतो निक्षेपरक्षाया अनन्तर श्रीपाञ्चरात्ररक्षा प्रणीतेति सम्यक् ज्ञायते । (दृश्यता ८१ पुट)

सात्त्विकसप्रदायप्रवर्तकमिति पारे गिरा खलु निगमान्तगुरोस्तस्मिन् बहुमानातिशय , यतो हि नाम पाञ्चरात्रशब्दस्य पूर्व श्रीशब्दमायोजयन्नेव तच्छास्त्रमेष सर्वत्र व्यवहरति । अत एवामुमपि ग्रन्थं—न हि पाञ्चरात्ररक्षेति अपि तु—श्रीपाञ्चरात्ररक्षेति श्रीशब्देन सहैव सर्वत्र निर्दिशति । महति शास्त्रग्रन्थे [1]न्यायपरिशुद्धौ, प्रपन्नानामुपजीव्ये [2]रहस्यत्रयसारे च ग्रन्थस्यास्य समाख्या नन्वेवमेवास्त्युदाहृतेति विदन्त्येव साम्प्रदायिका ।

श्रीमन्निगमान्तगुरुभि अनुगृहीतेषु तत्त्वहितपुरुषार्थप्रवर्तकेषु सुबहुषु ग्रन्थेषु केचन मतान्तरनिरासका , कतिचन स्वमतसस्थापका , अपरे केचन प्रपत्तिशास्त्रप्रतिष्ठापका . अन्ये च कतिचन तच्छास्त्रसम्मतसंप्रदायसंरक्षणपराश्चेति मन्ये श्रीदेशिकग्रन्थविमर्शकपराणा विदितमेव । एतेषु चान्तिमनिर्दिष्टा श्रीवैष्णवैर्बहुमता अभ्यर्हिततमा पञ्चरक्षाग्रन्था । ते च सच्चरित्ररक्षा, निक्षेपरक्षा, गीतार्थसग्रहरक्षा, रहस्यरक्षा,[3] श्रीपाञ्चरात्ररक्षा चेति प्रसिद्धा । साङ्गस्य न्यासविद्यास्वरूपस्य विविधै प्रकारै प्रतिपादका प्राथमिकाश्चत्वारो रक्षाग्रन्था प्रपत्तिमार्गप्रवृत्तै सुतरामुपजीव्यतयानुष्ठेयस्य स्वयप्रयोजन-

[1] "तत् मर्व श्रीपाञ्चगत्ररक्षासिद्धान्तव्यवस्थाया मर्वपरामर्शेन सावितमस्माभि " इति न्यायपरिशुद्धौ शब्दाध्यायस्य द्वितीयाह्निके ।

[2] "ஸாக்ஷாந மோக்ஷோபாயமும மோக்ஷப்ராபதியு முண டெனறும ஸ்ரீபாஞசராதரரக்ஷையிலே யுபபாதிதகோம" इति मध्येचरमश्लोकाधिकार श्रीरहस्यत्रयसारे ।

अतश्चावगम्यते—न्यायपरिशुद्धि , श्रीरहस्यत्रयसारश्च श्रीपाञ्चरात्ररक्षाया अनन्तर प्रणीतौ ग्रन्थाविति ।

[3] **सच्चरित्ररक्षा**—श्रीवैष्णवानाम् अनन्यप्रयोजनाना सच्चरितसबन्धिना विषयाणा प्रतिपादिका । **निक्षेपरक्षा**—न्यासविद्याया प्रतिपक्षप्रतिक्षेपपूर्वक सस्थापनाय प्रवृत्तोऽय ग्रन्थ । **गीतार्थसग्रहरक्षा**—न्यासविद्याप्रतिपादकशास्त्रतत्त्वस्यार्थविवरणपूर्वक तच्छास्त्ररक्षणाय प्रवृत्तेयम् । **रहस्यरक्षा**—न्यासविद्याया स्वरूपादीनामपवादान् अर्वाचीनै प्रवर्तितान् परिहरन् प्रपत्तिधर्मानुष्ठानस्वरूपस्य प्रतिपादनाय प्रवृत्तोऽय ग्रन्थ ।

भृतस्य भगवत्कैङ्कर्यधर्मस्यापवादगोष्ठीनाम् अपोहपूर्वक सरक्षणाय, पाञ्च-कालिकप्रक्रियाणा परिष्कृतप्रयोगप्रदर्शनाय च पप्रन्नजनहितैषिभि श्रीमद्वेङ्कट-नाथगुरुभि प्रणीतोऽय श्रीपाञ्चरात्ररक्षाग्रन्थ सर्वैरपि सत्सम्प्रदायाहितश्रद्धै सविमर्श परामृश्येतेति परमोऽस्माक अभिसन्धि ।

इद तावदन्ततो विशिष्य विषादावह न समभिधातुम्, यदुत तृतीयाधिकारे इज्याविधेर्विवरणावसरे हन्त ग्रन्थलोप सञ्जात इति, तत्र कियत्परिमितो वा ग्रन्थाशो लोपमवापेति न ज्ञातु शक्यत इति च[1] । अस्माभि सम्पादितेषु सर्वेष्वपि पुस्तकेषु "सर्वेषामन्ततो भगवत्प्राप्ति समानाविकलानामपि भागवतानाम् " इति वाक्यस्यानन्तर विषयलोप एकरीत्यैव दृश्यत इत्येतद्विचार्यमाणे, संवत्सराणा शतत्रय्या प्रागेव, आहोस्वित् श्रीवेदान्तदेशिकविरचितमूलकोश एव वा हेतुभिरस्म-न्मनसोऽगोचरै कैश्चित् एष च प्रतिसंधातुमशक्य समुपनतो मध्ये ग्रन्थलोप इत्यवगम्यते, येन च मनागिव मनस्यस्माकम् आशाभङ्ग सपदि पद निदधे । श्रीभाष्यकारप्रणीतनित्यग्रन्थविवरणमुखेन इज्याया व्याख्याने श्रीवेङ्कटनाथेन सत्यपि सम्यक् प्रतिज्ञाते[2] "अथ परमैकान्तिन" इति भाष्यकारोक्तस्य परमैकान्तिशब्दस्य—तदीयनित्यग्रन्थोपक्रम एव विद्यमानस्य प्रथमपङ्क्तिवाक्यस्य—विवरणप्रकरणारम्भ एव विषयलोपस्य विलोक्यमानत्वात्, नित्यग्रन्थविवरणात्मकस्य विस्तृतस्य विशिष्टस्यापि विषयस्य विलोप प्राय समुपनत इति, यत्सत्यं साम्प्रदायिकेषु विषयेषु सारभूतो निगमान्तगुरुभिर्निरूपित इज्याविधि प्रायो विलयमशेषतश्चावा-पेति च नैराश्यविसस्थुलेन मनसा निर्णेतव्यमस्ति ।

[1] दृश्यता ग्रन्थेऽस्मिन् १३८ पुटादारभ्य १४७ पुट यावत विषयस्यास्यावस्थिति ।
[2] दृश्यता १३८ पुटे प्राथमिक पङ्क्तिद्वयम् ।

ग्रन्थरत्नमिद नवीनया रीत्या परिष्कृत्याविष्कुर्वता न· संप्रति परा कोटिमारूढ· प्रमोदपरीवाह । निगमान्तगुरूणा वैदुष्यम्, वैष्णवजनधुरीणत्वम्, वैराग्यम्, वैभवमन्यदपि निस्समाभ्यधिकमिति निखिलवैष्णवजनाना विशिष्य विदुषा विदितचरमेव । एष च महान् वेदान्तिनामग्रणी , निबन्धकर्तॄणा नेता, दार्शनिकाना मार्गदर्शी, सर्वकवीना संस्कर्ता, भक्तकोटीना मकुटमणि , वादिना वाचस्पति , शान्तानामग्रेसर·, कर्मठानाम् प्राग्रहर , प्रपन्नाना प्रेष्ठश्च आसीदिति सर्वाभिमतेन हेतुना खलु सर्वतन्त्रस्वतन्त्राख्या सर्वतोऽस्य वव्रृधे समाख्या । आचार्याणाममीषा ग्रन्थस्यास्य संशोधने च, विविधाना विषयानुपूर्वीणा विभजनपूर्वकं नामनिर्देशविधाने च, बहुविधाना पाठभेदाना संयोजने च, प्रभिन्नाना प्रमाणाकराणा प्रसमीक्ष्य सघटने च, मुद्रणदोषाणा परित परिहरणे च वीततन्द्रम् आहृतेऽपि परिश्रमे, यत्सत्यं स्खलितानि कानिचन सन्त्येवात्र समुपनतानि, यानि च गुणपक्षपातिन प्रगुणमतय , विश्वस्यते, तितिक्षेरन्निति ।

श्रीनिगमान्तगुरो प्रबन्धरत्नस्यास्य सोत्कण्ठं संस्करणाय चाविष्करणाय च सति मया समुद्यमे विहिते, कदाचित् आकस्मिको विद्वद्वर्यै. अस्मत्सुहृद्भि वेदान्तशिरोमणिभि श्रीवेणुगोपालाचार्यै सह समागम· सल्लापश्च सङ्घटित । विषयमिममधिकृत्य यथाविनिश्चित मदभिप्रेतार्थे सत्यभिहिते, ते च ग्रन्थस्याम्य शोधनकर्मणि सपदि साहाय्यमाचरितुं स्वकीयं मनोभावमनुकूलम् आविरकुर्वन् । विविधाना निर्दिष्टपूर्वाणा दशाधिकाना मुद्रिताना हस्तलिखिताना च कोशानाम् आमूलात् पठनपुरस्सरं ग्रन्थस्यास्य परिशोधनविषये तैरापादितस्य सुमहत साहाय्यस्य सर्वदानुस्मरणादृते नान्यत् प्रतिविधातुं प्रभवाम । सन्दर्भेऽस्मिन् सप्रेमातिशय प्रमाणवचनानाम् आकरग्रन्थाद्यन्वेषणाय सोत्साहम् अनुपदम् उपकृतवता तत्रभवता

भूतपूर्वन्यायाधिकारिणा मत्प्रियसुहृदा तोट्टाल श्रीराजगोपालाचार्यमहोदयाना विषयेऽपि हार्द कार्तज्ञ्यमावहाम. । ऐहिकामुष्मिकतत्त्वविषयकज्ञानाभिवर्धनहेतूना ग्रन्थसग्रह-ग्रन्थप्रचारादिकार्याणा बहूपयोगिना निर्वहणाय निपुणमतिभि लोकहितैषिभि स्थापितस्य अडयार्-पुस्तकभाण्डागारस्याध्यक्षै सस्कृतभाषाया वैदिकधर्मेषु च विशिष्य विहितश्रद्धै, वैद्यरत्नविरुदभाग्भि सुगृहीतनामभि जि-श्रीनिवासमूर्तिमहाशयै मदावेदनम् अनुपदमेवाव्याक्षेपमनुरुध्य ग्रन्थस्यास्य मुद्रणमभ्युपगम्य तच्च कार्त्स्न्येन यथावन्निर्वर्तनाय साहाय्यं सर्वमप्याचरितमिति तेषा च धन्यवादपुरस्सरम् अभ्युदयपरम्परामाशासे ॥

श्रीमद्वेदान्तसूरेश्चरणकमलयोश्चञ्चरीकायमाण
तत्सूक्त्यास्वादनैकप्रवणनिजमना श्रीदुरैस्वामिनामा ।
रक्षा श्रीपाञ्चरात्रागमविधिनियता शोधिता नव्यरीत्या
नित्यानुष्ठानविद्भ्यो वितरति विनतो वीररघ्वीशसूनु ॥

कलिवृजिनसमुत्थैर्विप्लवैर्व्याहताथ
प्रमितिभिरमिताभि पाञ्चरात्रव्यवस्था ।
कविकथकमृगेन्द्रै स्थापिता यत्प्रबन्धे
तमहमुपहरामि प्रश्रितोऽभ्यर्हितेभ्य ॥

"आर्यगृहम्"
वेपेरि—मद्रास्
१८-२-१९४२

वैद्यरत्नम्
मेल्पाक्कम् दुरैस्वामि अय्यङ्गार्.

---

## । विषयसूचिका ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| भूमिका | १—२४ |
| प्रथमोऽधिकार.—सिद्धान्तव्यवस्थापना | १—४४ |
| मङ्गलाचरणम् | १ |
| पञ्चरात्राणा प्रामाण्यम् | २ |
| चत्वार सिद्धान्ता | ३ |
| सिद्धान्तानाम् असाङ्कर्यस्थापनम | ,, |
| सिद्धान्तानाम् असाङ्कर्ये पौष्करवचनविचार | ६ |
| चतुर्णामपि सिद्धान्ताना मोक्षप्रदत्वम् | ७ |
| सिद्धान्तसङ्करे तन्त्रसङ्करे च पाद्मवचनविचार: | ९ |
| सिद्धान्ताना पाद्मोक्त लक्षणम् | १० |
| मन्त्रसिद्धान्त: | ,, |
| आगमसिद्धान्त | ,, |
| तन्त्रसिद्धान्त. | ११ |
| तन्त्रान्तरसिद्धान्त· | ,, |
| एकत्र सिद्धान्ते दीक्षितस्य अन्यत्राधिकार: | १३ |
| उपरितनतन्त्राधिकारिणाम् अधस्तनतन्त्रेषु तत्तन्मार्गेण करणेऽधिकार: | ,, |
| एकायनविधानस्यान्यत्र प्रवेशे प्रत्यवाय. | १४ |
| प्रदक्षिणप्रणामादिषु सर्वेषा सर्वत्राधिकार: | ,, |

D

| विषयाः | पुटाङ्का |
|---|---|
| निर्विघ्नकैङ्कर्यसिद्धिप्रार्थनम् | ९३ |
| निर्विघ्नकैङ्कर्यसिद्धये गुरुपरम्पराप्रपत्तिपूर्वकहरिध्यानम् | ,, |
| योगान्तर्गत ध्यानम् | ९४ |
| सप्रणव व्यूहादिनामसकीर्तनम् | ,, |
| सन्ध्यापूर्वकालकर्तव्यक्रमः | ९६ |
| स्नानाय निर्गमन केशवध्यानं च | ९७ |
| विण्मूत्रविसर्जन शौचविधिश्च | ९८ |
| आचमन दन्तधावन च | १०१ |
| स्नानार्हतीर्थम् | १०३ |
| स्नानविधि. | १०४ |
| गौणस्नानानि | ,, |
| सन्ध्योपासनम् अर्घ्यदान च | १०६ |
| प्राणायाम-गायत्रीजपौ | ,, |
| अष्टाक्षरजपः | १०७ |
| सूर्योपस्थानम् | १०९ |
| आधारशक्त्यादितर्पणम् | ११० |
| स्वसूत्ररीत्यैव सन्ध्या अनुष्ठेया | ,, |
| सन्ध्यार्घ्ये भगवदर्घ्यत्वभावनम् | ११२ |
| सन्ध्यानादरे दोष | ११३ |
| ब्रह्मयज्ञ | ,, |
| तीर्थासन्नभगवदालयप्रणाम | ,, |
| प्रणामप्रकारा | ११४ |
| भगवत्सेवाप्रकारः | ११६ |
| भगवत्प्रसादस्वीकारप्रक्रिया | ११७ |
| द्वात्रिंशदपचारा | ११८ |

| विषया: | पुटाङ्का: |
|---|---|

# ।·शोधनसूची ।

[ग्रन्थमुद्रणानन्तरम् उपलब्धा मुद्रणदोषा केचन पाठभेदाश्चात्र तेषां शोधितपाठै सह निर्दिश्यन्ते । ग्रन्थस्यास्य पठनसमये विषया एते पाठकमहाशयै प्रथमत शोधनीया इति विज्ञाप्यते ।]

| पुट | पङ्क्ति | अशु | शुद्धम् |
|---|---|---|---|
| २ | ७ | अनुपपत्ति | अनुक्ति इति साधीयान् पाठ । |
| ४ | ८ | परस्परशाखा | परशाखा इति साधीयान् । |
| ११ | २० | —" सर्वतन्त्र | सर्वतन्त्र |
| १३ | ५ | नाधिकार | नाधिकार. |
| ,, | ९ | तन्त्राधिका | तन्त्राधिका |
| १६ | ४ | समाराधनमुच्यते | समाराधनमच्युत इति साधीयान् पाठ । |
| १७ | ९ | कर्म बिम्बाना | कर्मबिम्बाना |
| २३ | ११ | तथा वैखानसे न तु | त्यक्त्वा वैखानसेन तु इति साधीसान् पाठ । |
| २८ | २२ | पवेशो | प्रवेशो |
| ३६ | ७ | च्छात्र | च्छास्त्र |
| ४८ | ४ | कर्म काल | कर्मकाल |
| ५६ | १० | पूर्वी समर्पणीय | पूर्वीसमर्पणीय |
| ,, | १३ | भाष्याकार | भाष्यकार |
| ६५ | १५ | भ्यर्चेत | भ्यर्चन |
| ६९ | १५ | इति । | इति |
| ७१ | १३ | चेहा जायते | चेहाजायते |

E

| पुट | पङ्क्ति | अशु | शुद्धम् |
|---|---|---|---|
| ७८ | १ | दवताचन | दवतार्चन |
| ,, | १३ | उक्त ज | उक्त च |
| ७६ | ५ | योगमन्त्र | योगमन्ते |
| ,, | १७ | स्वाध्याय | स्वाध्याया |
| ७९ | १ | मनुरुत्वन् | मुपरुन्धन् (पाठभेद ) |
| ८१ | १३ | वाह्य | व्राह्य |
| ८२ | १० | मुहर्त | मूहूर्त |
| ८३ | १४ | विधीगते | विधीयते |
| ८७ | २८ | शयतस्थ | शयनस्थ |
| ८८ | १२ | गजेन्द्रमोक्षकथन | गजेन्द्रमोक्षकं च (पाठभेद )* |
| ,, | १८ | व्याघूर्णन् माल्य | व्याघूर्णन्माल्य |
| ,, | १६ | महतेर्न " ॥ | महतेर्न ' ॥ इति । |
| ९१ | ७ | द्रव्वाणि | द्रव्याणि |
| १०३ | १ | द्वाद्वश | द्वादश |
| १०७ | १० | शोवैष्णव | श्रीवैष्णव |
| ११८ | ५ | कृत्वा योग्यता | कृत्वायोग्यता |
| १२४ | ४ | अथवा मुनि इत्यस्यानन्तर ' स्ववर्णस्वाश्रमार्हेण विधिना श्रद्धयान्वित ' इत्येकमर्ध क्वचित् अधिक दृश्यते । | |
| १२५ | १४ | समाराधन | समिदाधान (पाठभेदः) |
| १३९ | २ | एवात्रा | एवात्र |
| १४४ | २ | देवी | देवि |
| १४६ | ५ | अष्टा | अष्ट |
| १४७ | ३ | वैभवेऽवि | वैभवीये (पाठभेद ) |
| ,, | ९ | समाना- | समाना |
| १५८ | ४ | तमेवेन | तमेवैक |

* एतच्चिह्नयुक्ता केचन पाठा ग्रन्थस्यास्य मुद्रणानन्तर मन्त्रसालयट्ट श्रीवेङ्कटाचार्यस्वामिना सविधे विद्यमानात् कोशादुपलब्धा ।

| पुट | पङ्क्ति | अशु | शुद्धम् |
|---|---|---|---|
| १६७ | ७ | काल इति | काल इति । |
| १६८ | १७ | 'तस्मात् सर्वेषु कालेषु', 'मामनुस्मर' | 'तस्मात् सर्वेषु कालेषु मामनुस्मर' |
| १७१ | ९ | ब्रह्मविदयापि | ब्रह्मविदपि इति पाठ साधीयान् । |
| १७४ | १० | पादावने जनात् | पादावनेजनात् |
| १८४ | १६ | सग्रहमर्ता | सग्रहकर्ता |
| १८८ | १४ | तैत्तरीय | तैत्तिरीय |
| ,, | १५ | (एतत्पङ्क्त्या पूर्वं तै स—तैत्तिरीयसहिता इति योजनीयम् ।) | |
| २०२ | १५ | चतुर्विंशापराव तु | चतुर्विंशापराव त |

## भूमिकायाम्

| पुट | पङ्क्ति | अशु | शुद्धम् |
|---|---|---|---|
| १ | ८ | नातिचिदेव | नातिचिरादेव |
| २ | ५ | व्यक्तिभि | व्यक्तिविशेषे |
| ३ | २४ | निदिष्टम् । | निर्दिष्टम् । |
| १५ | ११ | निगमान्तगुरुरो | निगमान्तगुरो |
| १६ | २ | ने | ते |
| २४ | ७ | तच्च | तस्य |

|| श्री. ||

# श्रीपाञ्चरात्ररक्षा

## श्रीमन्निगमान्तमहादेशिकप्रणीता

---

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

### सिद्धान्तव्यवस्थापनाख्यः

### प्रथमोऽधिकार ।

**मङ्गलाचरणम् ।**

चातुर्व्यूहं परं ब्रह्म षाड्गुण्यपरिकर्मितम् ।
पञ्चरात्रस्य कृत्स्नस्य प्रसूतिं पर्युपास्महे ॥
अनन्यदेवतास्थायिन्यायतेमहि ते वयम् ।
पञ्चरात्रमहाम्भोधिपारदृश्वनि सज्जने ॥
आरोहन्त्वनवद्यतर्कपदवीसीमादृशा मादृशा
पक्षे कार्तयुगे निवेशितपदा [1] पक्षे पतद्भ्यः परान् ।
सर्वानुश्रवसारदर्शिसशिर·कम्पद्विजिह्वाशन-
क्रीडाकुण्डलिमौलिरत्नघृणिभिः सारात्रिका. सूक्तयः ॥

[1] पदा—च, छ , पदान्—क, ख, ग

अत्र तावत् प्रत्यक्षितसमस्तवेदार्थतत्त्वस्थितिभि पाराशर्यप्रभृति-भिर्महाभारतादिषु भगवच्छास्त्रस्य सार्वभौमं प्रामाण्य प्रत्यपादि। शारीरके

पञ्चरात्राणां प्रामाण्यम्।

च, कपिलकणभक्षभिक्षुक्षपणकपशुपतिसमयप्रतिक्षेप-ममनन्तर तन्त्रान्तरसहपाठादिसभवन्मन्दमतिव्यामोह-शमनाय "उत्पत्त्यसम्भवात्", "न च कर्तु करणम्" इति सूत्राभ्या पूर्वपक्षमुपक्षिप्य, "विज्ञानादिभावे वा तदप्रतिषेध", "विप्रतिषेधाच्च" इति सूत्रद्वयेन जीवोत्पत्त्याद्यनुपपत्ति[1]तत्प्रतिषेध[2]प्रतिपादनद्वारेण सिद्धान्त ममर्थित। भगवद्यामुनमुनिभिर्भाष्यकारैश्च—

"इद महोपनिषद चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥
वेदान्तेषु यथासार सगृह्य भगवान् हरि।
भक्तानुकम्पया विद्वान् सचिक्षेप यथासुखम्"॥

इत्यादिप्रमाणगणप्रतिपादितप्रक्रियया अतिविततगहनगम्भीरनिगमशतशिखर-गतपरमपुरुषार्थतदुपायतदितिकर्तव्यतासग्रहरूपस्य भगवन्मुखोद्गतस्य शास्त्रस्य कारणदोषाद्यभावेन क्वचिदप्यप्रामाण्य न शङ्कनीयमिति निरणायि। कर्मकाण्डेऽपि प्रमाणलक्षणे सभवद्वेदविरोधाना व्यासाद्यपरिगृहीतानामेव स्मृतीनामप्रा-माण्यमसूत्र्यत। ये पुनश्चरमयुगमीमासकास्तन्त्रान्तरै समानयोगक्षेम सात्त्वतं शास्त्रमभिमन्यन्ते तेषा विकत्थनानि आगमप्रामाण्ये निराचक्रिरे। उक्त च—

"तच्चेदेतच्छ्रुतिपथपरिभ्रष्टतन्त्रै समानम्
पातृत्वेन प्रसजति तदा सोमपास्ते सुरापा।" इति।

शूद्रार्चनादिप्रसङ्गे त्वेव प्रतिबन्दी श्रीकृष्णमुनिभिरुक्ता—

[1] अनुपपत्तिशब्द छ कोशे नास्ति, अनुक्ति—ज
[2] प्रतिक्षेप—ख.

" हविष्कृतो यथा शूद्रे यथा वा बहुयाजिन ।
निर्वाह क्रियते तद्वच्छास्त्रस्यास्यापि नान्यथा" ॥ इति ।

अस्यार्थ[1]—यथा "हविष्कृदाधावेति शूद्रस्य", "बहुयाजिनोऽगारा-च्छूद्रवर्जम्" इत्यादिवाक्येषु कर्मविशेषाधिकारम्, उपचारविशेष वा समालम्ब्य निर्वाहस्तद्वदिहापीति । भट्टारकैश्च तन्त्रान्तरेभ्य इद सार्वत्रिकेण प्रामाण्येन व्यभज्यत—

"तस्मात् साख्य सयोग सपशुपतिमतं कुत्रचित् पञ्चरात्रम्
सर्वत्रैव प्रमाण.तदिदमवगतं पञ्चमादेव वेदात्" । इति ।

**चत्वार सिद्धान्ता ।**

तदेतत् "महतो वेदवृक्षस्य मूलभूतो महानयम्" इत्याद्युक्तानन्तशाखाश्रय-ऋगादिस्कन्धभिदुरनिगमतरुमूलभागोपबृंहणरूप स्व-मूलनिगमभागभेदात् [2]ऋगादिवदेव चतुर्धावतिष्ठते—आगमसिद्धान्तो मन्त्रसिद्धान्तस्तन्त्रसिद्धान्तस्तन्त्रान्तरसिद्धान्त इति ।

**सिद्धान्तानाम् असाङ्कर्यस्थापनम् ।**

चत्वारश्चैते सिद्धान्ता ऋगादिवदेव शाखाभेदैरवान्तरतन्त्रैर्भिद्यन्ते । तत्र, यथा ऋगादयो वेदभेदा तत्तच्छाखाभेदाश्च पूर्वपूर्वपरिग्रहानुसारेण व्यवतिष्ठन्ते पुत्रादिभिश्च परिगृह्यन्ते तथा[3] सिद्धान्त-भेदास्तदवान्तरभेदाश्च प्रथमपरिग्रहानुसारेण व्यवतिष्ठन्ते । यथा च[4] वाचनिकातिरिक्ते वेदान्तरशाखान्तरसूत्रान्तरसङ्करे दोष तथेह सिद्धान्तसङ्करे तन्त्रसङ्करे प्रत्येकतन्त्रान्त [5]र्गतिनियतवैकल्पिकधर्मादिसङ्करे च ।

[1] अयमर्थ—क, ख, ग, च, छ, ज, झ.

[2] भागभेदवदृगादि—घ

[3] तथात्र—घ

[4] चकार ख पुस्तके नास्ति

[5] प्रतिनियत—ख.

असङ्कीर्णा चेयं व्यवस्था प्रमाणसहकृतपारम्पर्यपर्यालोचनया व्यवस्थाप्या। इह च 'गर्भाधानादिदाहान्तसंस्कारान्तरसेवनात्[2]' भागवतानामब्राह्मण्यं पूर्वपक्षिणा प्रसञ्जितं परिहरद्भिर्भगवद्यामुनमुनिभिरर्थतः समर्थितम्—"यदेते[3] वंशपरम्परया वाजसनेयशाखामधीयाना कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते। ये पुनः सावित्र्यनुवचनप्रभृतित्रयीधर्मत्यागेन[4] एकायनश्रुतिविहितानेव चत्वारिंशत् संस्काराननुतिष्ठन्ति,[5] तेऽपि स्वशाखागृह्योक्तमर्थं यथावदनुतिष्ठमाना न शाखान्तरीयकर्माननुष्ठानात् ब्राह्मण्यात् प्रच्यवन्ते। अन्येषामपि परस्परशाखाविहितकर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात्। सर्वत्र[6] हि जातिचरणगोत्राधिकारादिव्यवस्थिता एव समाचारा उपलभ्यन्ते। यद्यपि सर्वशाखाप्रत्ययमेकं कर्म तथापि परस्परविलक्षणाधिकारिसंबद्धा धर्माः न क्वचित् समुच्चीयन्ते। विलक्षणाश्च त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यः त्रय्यन्तैकायनश्रुतिविहितविज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येकोपायकर्माधिकारिणो मुमुक्षवो ब्राह्मणा इति नोभयेषामप्यन्योन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति। यथा चैकायनशाखाया अपौरुषेयत्वं तथा काश्मीरागमप्रामाण्य एव प्रपञ्चितमिति नेह प्रस्तूयते। प्रकृतानां तु भागवतानां सावित्र्यनुवचनादित्रयीधर्मसम्बन्धस्य स्फुटतरमुपलब्धिः[7] न तत्त्यागनिमित्तव्रात्यत्वादिसन्देहं सहते" इति।

[1] प्रमाणान्तरसहकृत—क, ख, ग, च, झ

[2] संस्कारासेवनात्—छ, ज

[3] य एते—क, ख, ग, च, छ, ज, झ, यत एते—न्यायपरिशुद्धौ

[4] धर्मात्यागेन—न्यायपरिशुद्धौ

[5] संस्कारान् कुर्वते—घ, छ, ज, झ.

[6] सर्वे हि—ज

[7] उपलब्धेः इति सर्वत्र पाठः, उपलब्धिः इति तु न्यायपरिशुद्धौ

अत्र विज्ञानशब्देन संवित्सिद्ध्यादिषु स्वयमेव स्थापित विशिष्ट ज्ञान विवक्षितम् । आह हि—

"यथा चोलनृप सम्राडद्वितीयोऽस्ति भूतले ।
इति तत्तुल्यनृपतिनिवारणपरं वच ॥
न तु तत्पुत्रतद्भृत्यकलत्रादिनिवारणम् ।
तथा सुरासुरनरब्रह्माण्डशतकोटय ॥
क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितु ।
ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ता ॥
विष्णोर्विभूतिर्महिमसमुद्रद्रप्स[1]विप्रुष" । इति ।

इम च वेदभेदं भोजराजबलदेवाचार्यादयश्च विविचते—

'यो वेदवृक्ष बहुमूलशाखं नानाफलार्थिद्विजसंघसेव्यम् ।
पूर्वश्रवानुश्रवभेदभिन्नमारोपयत्त[2] पुरुषं प्रपद्ये" ॥ इत्यादिभि ।

एवं च सर्वत्रासङ्कर संग्रहेण प्रदर्शित । श्रीसात्त्वते—

"न शास्त्रार्थस्य शास्त्राणा बुद्धिपूर्व उपप्लव ।
आचर्तव्य इहाज्ञानात्[3] पारम्पर्यक्रम विना" ॥ इति ।

अस्खलितपारम्पर्यप्रत्यभिज्ञानेषु[4] परिदृश्यमानप्रमाणमूलानि आचारपरम्परापरिगृहीतानि च कर्माणि न मात्रयापि परिभाव्यानि[5] । न च तद्विरुद्धान्युपादेयानीत्युक्त भवति ।

[1] समुद्रलव—ग , समुद्रजल—क, च, झ.
[2] आरोपयन्त—क, ख, च, झ
[3] इहाज्ञात्वा—घ, छ
[4] प्रत्यभिज्ञानेषु स्थानेषु—घ, ङ
[5] परिहाप्यानि—क, ग, घ, ङ, च, छ, ज

श्रीपौष्करे च अधिकारिनिरूपणाध्याये प्रतिनियताधिकारिविषयत्वाभिप्रायेणैव सिद्धान्तभेदस्तदवान्तरभेदश्च दर्शित । यथा— —

सिद्धान्तानाम् असाङ्कर्ये पौष्करवचनविचार ।

कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते ।
क्रमागतै स्वसज्ञाभिर्ब्राह्मणैरागम तु तत् ॥
विद्धि सिद्धान्तसज्ञ च तत्पूर्वमथ पौष्कर ।
नानाव्यूहसमेतं च मूर्तिद्वादशक हि तत् ॥
तथा मूर्त्यन्तरयुत प्रादुर्भावगण हि यद् ।
प्रादुर्भावान्तरयुत धृतं हृत्पद्मपूर्वके[1] ॥
लक्ष्म्यादिशखचक्राख्य[2]गारुत्म्यसदिगीश्वरै ।
सगणैरस्त्रनिष्ठैश्च तद्विद्धि कमलोद्भव ॥
मन्त्रसिद्धान्तसज्ञ च शास्त्रं सर्वफलप्रदम् ।
विना मूर्तिचतुष्केण यत्रान्यदुपचर्यते ॥
मन्त्रेण भगवद्रूपं केवलं वाङ्गसवृतम् ।
युक्त श्रियादिकेनैव कान्ताव्यूहेन पौष्कर ॥
भिन्नैराभरणैरस्त्रैरावृत च सविग्रहै ।
तन्त्रसज्ञ हि तच्छास्त्र परिज्ञेय हि चाब्जज ॥
मुख्यानु[3]वृत्तिभेदेन यत्र सिहादयस्तु वै ।
चतुस्त्रिद्व्यादिकेनैव योगेनाभ्यर्थितेन तु ॥

[1] तत् पद्मपूर्वक—ज
[2] चक्राख्या—घ
[3] मूल्यानुवृत्ति—घ

सवृता परिवारेण स्वेन स्वेनोज्झितास्तु वा ।
यच्छक्त्याराधिता [1] सर्वं विद्धि तन्त्रान्तरं तु तत् ॥
एव नानागमाना च सामान्यं विद्धि सर्वदा ।
नामद्वय वा [2] सिद्धान्तपञ्चरात्रेति पौष्कर ॥
एकैकं वहुभिर्भेदैरामूलादेव सस्थितम् ।
नानाशयवशेनैव सिद्धाद्यै प्रकटीकृतम् ॥
संक्षिप्त सप्रपञ्चं च तृतीयमुभयात्मकम् ।
सेतिहासपुराणैस्तु वेदवेदान्तसयुतै ॥
ये जन्मकोटिभि सिद्धास्तेषामन्तेऽत्र सस्थिति "। इति ।

अत्र एकैकस्य सिद्धान्तस्यामूलादेव बहुभिर्भेदै संस्थितत्ववचनात् चतुर्णा सिद्धान्ताना तदवान्तरतन्त्रभेदाना च सिद्धान्तान्तरतन्त्रान्तरसङ्करपरिहारेणैव सर्वदावस्थानं सूचितम् ।

**चतुर्णामपि सिद्धान्ताना मोक्षप्रदत्वम्।**

अत्र च [3] सिद्धान्तसञ्ज्ञितानामेषा चतुर्णामपि मोक्षप्रदत्वमनन्तरमेवोक्तम्—

"यस्मात् [4] सम्यक् पर ब्रह्म वासुदेवाख्यमव्ययम् ।
एतस्मात् प्राप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा ॥
सिद्धान्तसञ्ज्ञा विप्रास्य सार्थका अत एव हि "। इति ।

अत्र सार्थका इति बहुवचनान्तसामानाधिकरण्यात् सिद्धान्तसंज्ञाशब्दोऽपि बहुवचनान्त सन् आगमादिविशेषणयोगेन चतुर्धा संज्ञावस्थानमभिप्रैति ।

[1] आराधित—क, ख, ग, झ
[2] द्वय च—घ, ङ, च, छ, ज
[3] चकार ख, ग, ज, झ, पुस्तकेषु नास्ति.
[4] तस्मात्—क, ख, ग, झ

पञ्चरात्रशब्दवत् सिद्धान्तशब्दोऽपि चतुर्णां साधारण इति चात्रैव पूर्वमुक्तम् । पाद्मे च "सदागमादिसिद्धान्तचतुष्के सत्पदप्रदे" इति चतुर्णां सत्पदशब्द-वाच्यभगवत्पद[1]प्राप्तिसाधनत्वमुक्तम् । हयग्रीवसंहितायामपि कस्यचिन्मोक्षै-कान्त्यम् अन्येषामपि फलान्तरेण सह मोक्षप्रदत्वमुक्तम् ।

"आगमाख्यं हि सिद्धान्त सन्मोक्षैकफलप्रदम् ।
मन्त्रसंज्ञ हि सिद्धान्त सिद्धिमोक्षप्रदं नृणाम् ॥
तन्त्रसज्ञ तु[2] सिद्धान्तं चतुर्वर्गफलप्रदम् ।
तन्त्रान्तर हि सिद्धान्तं वाञ्छितार्थफलप्रदम् "॥ इति ।

अत्र वाञ्छितार्थशब्देनाविशेषात् त्रिवर्गवदपवर्गोऽपि सगृह्यते । अत एषा चतुर्णामपि परब्रह्मभूतवासुदेवप्रापकत्वात् अपवर्गार्थिभिर्मोक्षोपायो-पदे[3]शप्रदेशेषु "विकल्पोऽविशिष्टफलत्वात्" इति न्यायेन सदक्षरदहर-मधुभूमवैश्वानरशाण्डिल्यनाचिकेतोपकोसलप्रतर्दनसंवर्गान्तरादित्यानन्दमय - विद्यादिष्विव वैकल्पिक परिग्रह । ब्रह्मस्वरूपनिरूपकधर्मव्यतिरिक्ताना तत्त-द्विद्याप्रतिनियतगुणाना यथा विद्यासु परस्परमनुपसंहारस्तथात्रापीति प्रत्येकं प्रतिनियताना प्रक्रियाणा परस्परासङ्करेण प्रयोग सिद्ध । यत्र तु मधुविद्यादौ वसुपदप्राप्त्यादिपूर्वकब्रह्मप्राप्तिवत् परम्परया वासुदेवप्राप्तिर-भिधीयते तत्रापि तत्तदर्वाचीनपर्वव्यवहितपरप्राप्तिकामा[4]नामधिकार इति व्यवस्था । तदभिप्रायेण चोक्तं भाष्ये—"तद्धि वासुदेवाख्यं परं ब्रह्म सम्पूर्णषाड्गुण्यवपु सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकार भक्तैर्ज्ञान-

[1] भगवत्प्राप्ति—ख
[2] सज्ञ हि—क, ख, ग, च, छ, झ
[3] उपदेश—क, ख, ग, झ कोशेषु नास्ति
[4] कामनाया—घ

पूर्वेण कर्मणाभ्यर्चितं सम्यक् प्राप्यते । विभवार्चनाद्व्यूह प्राप्य व्यूहार्चनात् पर ब्रह्म वासुदेवाख्य सूक्ष्मं प्राप्यत इति वदन्ति" इति । अतश्चतुर्णामप्यपवर्गे तात्पर्यम् । फलान्तरसाधनवचनस्यान्यार्थत्व स्वयमेवोक्तम्[1]—"प्रत्यर्थं च मोक्षस्य सिद्धय सम्प्रकीर्तिता ।" इति । एवं चतुर्णामपि मोक्षप्रदत्वे हि[2]·त्रय्यन्तसारोपबृंहणरूपत्वमपि समञ्जसं भवति ।

**सिद्धान्तसङ्करे तन्त्रसङ्करे च पाद्मवचनविचार ।**

पाद्मे चर्यापादे चतुर्णामेतेषा परस्परविभाग, सिद्धान्तसङ्करे तन्त्रसङ्करे च दोष[3] प्रपञ्चित —

"तच्चतुर्धा स्थितं शास्त्रम् ऋगादिवदनेकधा ।
एकैक भिद्यते तन्त्रं शाखाभेदेन भूयसा ॥
प्रथमं मन्त्रसिद्धान्त द्वितीयं चागमाह्वयम् ।
तृतीयं तन्त्रसिद्धान्त तुर्यं तन्त्रान्तर भवेत्" ॥ इति ।

अत्र आगम-मन्त्रसिद्धान्तयो पौष्करोक्तक्रमाद्व्युत्क्रमेणोपादानं सिद्धिमोक्षप्रदमन्त्रसिद्धान्तप्राशस्त्ये तात्पर्यात् । अत्रापि हि आगमसिद्धान्तस्य केवलमोक्षप्रदत्वलक्षणोऽतिशय[4] 'कर्मणामपि सन्यास कथ्यते यत्र चागमे" इति प्रदर्शित एव । अत्र काम्यकर्मणा स्वरूपत संन्यास·, स्ववर्णाश्रमादिनियताना[5] भगवद्गीताष्टादशाध्यायनिर्णीतप्रकारेण सात्त्विकत्याग । स्वशाखागृह्योक्तमर्यादया च सर्वत्र नित्यनैमित्तिकादिपरिग्रह ।

[1] उक्त पौष्करे—घ
[2] मोक्षप्रदत्वे सिद्धे हि—व
[3] दोषश्च इति पाठश्चेत् साधीयान्
[4] अतिशय —क, ख, ग, झ कोशेषु नास्ति
[5] स्ववर्णाश्रमनियताना—क, ख, ग, च, झ

2

अत आगमसिद्धान्ते सर्वकर्मस्वरूपत्याग इति न भ्रमितव्यम् । कर्मविशेष भूयस्त्वात् । अत एव हि तन्निष्ठानधिकृत्योक्तम्—

' त्रयोदशविध कर्म कामादिपरिवर्जितम् ।
गुणै सायमिकैर्युक्तमनुतिष्ठन्ति साधव " ॥ इति ।

अत्रैवोद्दिष्टक्रमेण चत्वार सिद्धान्ता लक्ष्यन्ते ।

**सिद्धान्ताना पाद्मोक्त लक्षणम् ।**

" एकैव मूर्तिराराध्या प्राधान्येनेतरा मुन ।
देव्य श्रियादयश्चापि सपूज्या परिवारवत् ॥
आयुधै शङ्खचक्राद्यै श्रीवत्साद्यैश्च भूषणै ।
मूर्तिमद्भि परिवृता केवलाबाम्बुजासन ॥
कथ्यते यत्र तत् प्रोक्त **मन्त्रसिद्धान्त**मग्रिमम् ।
वासुदेवादयो व्यूहाश्चत्वार साधकैरपि ॥
[1]क्रमागतैस्तुल्यकक्ष्या पूज्यास्तु[2] प्रभवाप्यये ।
कर्मणामपि सन्यास कथ्यते यत्र चागमे ॥
**तन्त्रमागमसिद्धान्तं** तदुक्त कमलासन ।
नवानामपि मूर्तीना प्राधान्य यत्र कथ्यते ॥
मूर्तयो द्वादशाङ्गानि तेषामेव तथापरे ।
प्रादुर्भावगणाश्चापि मूर्त्यन्तरगणा अपि ॥
प्रादुर्भावान्तरयुता सदिग्देवै [3] सहायुधै ।

[1] क्रमागता —घ
[2] कक्ष्यापूज्यास्तु—क, ग, झ
[3] सह देवैः—ज

मूर्तिमद्भिश्च देवीभिर्लक्ष्म्यादिभिरपि स्फुटम् ॥
तत् तन्त्रसिद्धान्ताह्वानं चतुर्थं परमं पुनः ।
सौम्यसिंहादिभूयिष्ठवक्त्रभेदैश्चतुर्मुख ॥
द्वित्र्यादिमुखभेदा वा मूर्तिरेकैव पूज्यते ।
संवृता परिवारैः स्वैर्विना वा सर्वकामदा ॥
यत्र तन्त्रान्तरं तत् स्याच्चतुर्थं चतुरानन ।
येन सिद्धान्तमार्गेण कर्षणादिक्रिया कृता ॥
आदौ तेनैव सकला नान्यसिद्धान्तवर्त्मना ।
तन्त्रेणापि तथा येन कर्षणादिक्रिया कृता ॥
तेनैव सकला कार्या न तन्त्रान्तरवर्त्मना ।
तन्त्रान्तरेऽपि कथितमनुक्तं ग्राह्यमेव हि ॥
सिद्धान्तसङ्करस्तस्मात्तन्त्रसङ्कर एव च ।
दोषाय कल्पते राजराष्ट्रधामक्षयात्मने ॥
सिद्धान्तसङ्करे जाते प्रमादात्तस्य शान्तये ।
कृत्वा सम्प्रोक्षणं पूर्वं सहस्रकलशाप्लवं ॥
कर्तव्यः स्नपनं कुर्यात्तन्त्रसङ्करसम्भवे ।
अन्ते महोत्सवं कुर्यात् ध्वजारोहणपूर्वकम्" ॥ इति ।

अत्र पाद्मोक्ततन्त्रे[1]-तन्त्रान्तरलक्षणं पौष्करोक्ताविरोधेन नेतव्यम् । यदि द्वयोर्ग्रन्थयोरैकार्थ्यं संभवति तदा न विरोधः । इतरथा तन्त्रतन्त्रान्तर-लक्षणं[2] द्विप्रकारमनुसन्धेयम् । यथा न्यायविस्तरे—"सर्वतन्त्रप्रतितन्त्रा-

[1] तन्त्र—घ कोशे नास्ति

[2] इतरतन्त्रेषु अभ्युपगमसिद्धान्ततन्त्रतन्त्रान्तर लक्षण—क, ख, ग.

भ्युपगमाद्यागमसिद्धान्तेषु अभ्युपगमसिद्धान्तस्य द्वेधा लक्षणमक्षपादाभिप्रेत वर्णयन्ति—

"सावित परतन्त्रे य स्वतन्त्रे च समाश्रित[1] ।
स ह्यभ्युपगमो न्याये[2] मनसोऽनुमतिर्यथा ॥
तद्विशेषपरीक्षा वा सद्भावेऽन्यत्र साधिते ।
यथान्यत्र मनस्सिद्धौ[3] तस्याक्षत्वपरीक्षणम्" ॥ इति ।

पारमेश्वरोक्त तन्त्र-तन्त्रान्तरलक्षण तु पौष्करोक्तेन समानमेव[4] । तथा हि प्रायश्चित्ताध्याये सङ्करादिदोषपरिहारार्थं विभज्यमानेषु सिद्धान्तेषु आगम-मन्त्रसिद्धान्तप्रपञ्चनानन्तरमुच्यते —

"परव्यूहादिभेदेन विनैकैकेन मूर्तिना ।
साङ्गेन केवलेनाथ कान्ताव्यूहेन भूषणै ॥
तथास्त्रैर्विग्रहोपेतैरावृतं तन्त्रसञ्ज्ञितम् ।
नृसिंहकपिलक्रोडहंसवागीश्वरादय ॥
मुख्यानुवृत्तिभेदेन केवला वाङ्गसयुता[5] ।
चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभि ॥
कान्तागणैश्च लक्ष्म्याद्यै परिवारै खगादिभि ।
पूजिता विधिना यत्र तत्तन्त्रान्तरमीरितम्" ॥ इति ।

[1] समाहित —ज.
[2] न्यायो—क, झ
[3] सिद्ध—क, झ
[4] पौष्करोक्तसमानमेव—घ, ज
[5] सयुता इत्येव सर्वत्र पाठ

तदेवं व्यवस्थितेषु सिद्धान्तेषु सङ्करपरिहार पाद्मे स्पष्ट । तस्मिन्नेव चाध्याये क्वचित् सिद्धान्ते तदवान्तरतन्त्रभेदे वा दीक्षितस्य सिद्धान्तान्तरोक्तासु तन्त्रान्तरोक्तासु च क्रियासु अनधिकार उक्त ।

**एकत्र सिद्धान्ते दीक्षितस्य अन्यत्र नाधिकार ।**

"एकत्र दीक्षितस्तन्त्रे सिद्धान्ते वा द्विजोत्तमः ।
क्रिया न कुर्यादन्यत्र कर्षणादि [1]चतुर्मुख ॥
आचार्यकमथार्त्विज्यं पूजाद्य मधुविद्विष ।
तन्त्रभेदे च सिद्धान्तभेदेऽपि च[2] न युज्यते" ॥ इति ।

**उपरितनतन्त्राधिकारिणाम् अधस्तनतन्त्रेषु तत्तन्मार्गेण करणेऽधिकार ।**

"तन्त्रान्तरे तथा तन्त्र-मन्त्रै[3]सिद्धान्तवर्त्मनि[4] ।
दीक्षिताना क्रमेणैव ह्युपर्युपरि योगत ।
अन्येषामधिकार स्यात् तत्तत्सस्कारपूर्वकम्" ॥

इत्युक्त्वा पुनरप्युपर्युपरितन्त्रस्थिताना[5]मधोऽधस्तन्त्राधिकारित्वमुक्तम्[6] ।

"कारणागमसिद्धान्तनिष्ठेनान्यैस्त्रिभि सदा ।
अर्चनीयमथान्याभ्या मन्त्रसिद्धान्तिना तथा ॥

[1] कर्षणादीश्चतुर्मुख—क, ख, ग, च　(कर्षणादि इति तु साधीयान् ।)
[2] भेदेऽपि हि—ग
[3] मन्त्रे—ज, झ , तन्त्रे मन्त्रसिद्धान्त—ख
[4] वर्त्मना—क, झ
[5] तन्त्राधिकाराणा—क, ख, ग, च, झ
[6] अधिकारित्व प्रदर्शितम्—क, ख ग, च, ज, झ

पूजनीयमथान्येन तन्त्रसिद्धान्तिनानिशम् ।
स्वेन तन्त्रान्तरेणैव पूजनीय स्वके गृहे ॥" इति ।

अत्राप्युत्कृष्टसिद्धान्तस्थितेनापि[1] अपकृष्टसिद्धान्तस्थानेषु तत्तत्सिद्धान्तप्रकारेणैव पूजनीयत्वमुक्तम् । उत्कृष्टसिद्धान्तस्थितस्य स्वस्थानेऽपकृष्टसिद्धान्तप्रसङ्गाभावात् । अत एव ह्यनन्तरमेवमुच्यते[2]—

' मुख्याधिकारिण सन्ति यदि गौणाधिकारिण ।
स्वतन्त्रेण प्रवेष्टव्या प्रासादे च स्वतन्त्रके ॥" इति ।

स्वतन्त्रेण स्वकीयेन प्राक्प्रवृत्तशास्त्रेणेत्यर्थ ।

एकायनविधानस्यान्यत्र प्रवेशे प्रत्यवाय ।

विशेषतश्च एकायनविधानस्यान्यत्र प्रवेशे प्रत्यवायातिशयश्च[3] तत्रैवोक्त —

"तत्सिद्धान्तान्यमार्गेण स्थापितं बिम्बमालये ।
अज्ञानादथवा मोहादेकायनविधानत ।
अर्चयन्नापदं सर्वामाप्नोतीह परत्र च " ॥ इति ।

प्रदक्षिणप्रणामादिषु सर्वेषा सर्वत्राधिकार ।

एवमेकैकसिद्धान्तस्थिताना सिद्धान्तान्तरक्रियासु यथोक्तप्रक्रिययानधिकारे समर्थिते सिद्धान्तान्तरप्रतिष्ठितेषु भगवदालयेषु तदन्यसिद्धान्तस्थिताना प्रदक्षिणप्रणाममालाकरणदीपारोपणसंमार्जनसेचनोपलेपनालङ्करणरक्षणसवर्धनहविरादिसमर्पणस्तोत्रादीना साधारणधर्माणामपि प्रतिषेधप्रसङ्ग[4]माशङ्क्य परिजहार—

[1] अपि—घ कोशे नास्ति ।
[2] मेवोच्यते—क, ख, ग, च, झ
[3] चकार —घ, छ, ज कोशेषु नास्ति
[4] प्रतिषेधमाशङ्क्य—क, ख, ग, च

"प्रदक्षिणप्रणामादि राद्धान्तेऽन्यत्र केवलम् ।
विहितं नार्चनं कुर्याद्राजराष्ट्रभयावहम्" ॥ इति ।

[1]तत्रैकोनविंशेऽध्याये सिद्धान्तसङ्करे प्रत्यवायं विस्तरेण प्रतिपाद्य, असङ्कीर्णसिद्धान्तधर्माणामेवाधिकारिणामन्योन्यसंबन्धा[2]दियोग्यत्वम् इतरेषा तु बाह्यानामिव वर्जनीयत्वमपि प्रतिपादितम्—

"सिद्धान्ताना चतुर्णा तु साङ्कर्यं व्यसनावहम् ।
सिद्धान्तेषु चतुर्ष्वेक पूर्वैर्नृभिरनुष्ठितम् ॥
त्यक्त्वा समाश्रयेदन्य नरो भवति किल्बिषी ।
तस्माज्जन्मप्रभृत्येकराद्धान्तनियतो भवेत् ॥
अन्यथा कुलमात्मानं सर्वं नाशयति स्वयम् ।
मन्त्रमण्डलकुण्डादिक्रियामुद्रोपचारकै ॥
योग नयति यो मोहात् स्वसिद्धान्तोक्तवर्त्मनि[3] ।
सोऽपि स्वकुलजान् सर्वान्[4] परम् आत्मानमब्जज ॥
नयेन्निरयमत्युग्रं पुरुषान् पुरुषाधम· ।
निष्फला च क्रिया तस्य प्रत्युतानर्थकारिणी[5] ॥
अकर्मणोऽस्य तत्कोपो[6] राजराष्ट्रभयावह ।
कर्ता कारयिता चोभौ[7] सान्वय विनशिष्यत· ॥

[1] तत्रैव—छ, ज
[2] आदि—घ कोशे नास्ति
[3] वर्त्मना—घ
[4] धर्मान्—क, ख, झ
[5] कारणम्—घ, ज
[6] कुप्येच्च देवस्तत्कोपो—घ
[7] चैव—क, ख, ग, झ

न मन्निधान च हरेर्धाम्नि हानिश्च सम्पदाम् ।
गद्धान्तमङ्कर कार्यो नान्यसिद्धान्तकर्मणा ॥
मन्त्रसिद्धान्तमुख्येपु चतुर्ष्वपि यथापुरम् ।
अनुतिष्ठन्ति ये कर्म ममाराधनमुच्यते ।
असङ्करेण तेऽन्योन्य संबन्धार्हा नरोत्तमा· " ॥ इति ।

अमङ्करेणानुतिष्ठन्तीत्यन्वय ।

**सिद्धान्तसङ्करे दोषप्रपञ्चनम् ।**

तत्रैव जीर्णोद्धाराध्याये—

" या मूर्तिर्येन तन्त्रेण यादृशेनाधिकारिणा ।
प्रथमे कल्पने सैव द्वितीये कल्पने भवेत् ॥
मूर्तिस्तदेव तन्त्र च स एव स्थापकः पुन ।
तन्त्राधिकारिमूर्तीना व्यत्यये कल्पिते सति ।
नृणा नरपतेश्चापि राष्ट्रस्य च भवेत् क्षय ॥ " इति ।

तस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्याये—

" जनने मरणे चैव श्वसृगालमृगादिभि ।
स्पृष्टे च बिम्बे तन्त्राणा सङ्करे समुपस्थिते ।
एवमादिषु चान्येषु सम्प्रोक्षणविधिर्भवेत् " ॥ इति ।

[1] नारदीयेऽपि—

" व्यत्यये परिवाराणा भोगादीना च गौतम ।
पूर्ववत् स्नपनं कृत्वा शान्तिहोमं समाचरेत् " ॥ इति ।

[1] सबद्धा हि—क, ख, च, ज, झ

अत्रादिशब्देन सिद्धान्तव्यत्यय-तन्त्रव्यत्ययादिसंग्रह । अपेक्षितत्वादविशेषाच्च । अत एव ह्यत्रैवोक्तम्—

"तन्त्रेणैकेन कर्तव्य कर्षणादिषु नारद ।
यत्तन्त्रेण समारब्धं तत्तन्त्रेणैव कारयेत् ॥
[1]अनुक्ताश्चान्यतन्त्रेषु निरीक्ष्यात्र नियोजयेत्[2] ।
विशेषाश्च[3] मुनिश्रेष्ठ त्वन्यथा राष्ट्रनाशकृत्" ॥ इति ।

पारमेश्वरे च प्रतिष्ठाध्याये—

"विशेषेण स्वयंव्यक्ते दिव्ये सैद्धेऽपि वार्षके[4] ।
स्थाने तु कर्म बिम्बाना व्यत्यय न समाचरेत् ।
द्वाराङ्गावृतिदेवाना पूजाया भवनस्य[5] च ॥"

इत्यारभ्य —

"न लक्षणान्तरं कुर्यात् न प्रमाणान्तर तथा ।
न तु द्रव्यान्तर चैव न च कुर्यात् क्रियान्तरम् ॥
मन्त्रान्तर[6] न कुर्वीत सर्वं कुर्याद्यथापुरम् ।
कुर्याच्चेदेवमादीना विपर्यास महामते ।
राज्ञो राष्ट्रस्य नाशः स्यात् सर्वस्यापि स्वसन्तते" ॥ इति ।

[1] अनुक्ताश्च—क, ख, ग
[2] निरीक्ष्यान्यत्र योजयेत्—क, ख, च, झ
[3] विशेषाच्च—क, ख
[4] सिद्धेऽपि चार्षके—क, ख, ग, च, छ, ज, झ
[5] हवनस्य—घ, ङ
[6] तन्त्रान्तर—क, ख, ग, ङ

तत्रैव –

"भोगाना च विपर्यास मन्त्राणा च विपर्ययम्[1] ।
ध्यानाना चैव मुद्राणा देवताना तथैव च ।
अन्येषामेवमादीना[2] व्यत्यास न समाचरेत्" ॥ इति ।

तथोत्तरत्र प्रायश्चित्ताध्याये—

"प्रासादश्च तथा बिम्बं येन शास्त्रेण निर्मितौ ।
प्रतिष्ठाप्य च तेनैव नित्यादौ पूजयेद्धरिम् ॥
योऽर्चयेदन्यमार्गेण तथा चार्चापकस्तु य ।
तावुभौ कलुषात्मानौ राज्ञो राष्ट्रस्य वै गुरो ॥
कुल च व्याधित चैव विप्लवं दु खमञ्जसा ।
वित्तहानि विशेषेण कुर्यातामालयस्य च ॥
[3]न कुर्यात्तन्त्रसाङ्कर्य पञ्चरात्रपरायण[4] ।
पुन प्रतिष्ठा कर्तव्या कृतश्चेत्तन्त्रसङ्कर" ॥ इति ।

तत्रैव सिद्धान्तभेदं[5] विस्तरेण प्रतिपाद्यानन्तरमुच्यते—

"शास्त्रमन्त्रक्रियादीना मूर्तीना भवनस्य च ।
देशिकस्याभिजातस्य यथापूर्व परिग्रह ॥
तथैव यावत्कालं तु नाचर्तव्य तदन्यथा ।

[1] मन्त्राणाा च महामते—घ, छ, ज

[2] चैवमादीना—क, ख, ग, च, झ

[3] न कार्य—घ, छ

[4] परायणै.—घ, छ

[5] तत्रैव च सिद्धान्तभेदान्—छ, ज.

विपरीते कृते चात्र राजराष्ट्राद्यनर्थकृत् ॥
ततः समाचरेद्यत्नात् प्रतिष्ठा प्राक्प्रकारतः ।
ततः सिद्धान्तसाङ्कर्यं नाचर्तव्यं कृतात्मभिः ॥
यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत् ।
प्रतिग्राह्यमथान्योन्यं विरुद्धं संत्यजेद्बुधः " ॥ इति

एवं कालोत्तरे चतुर्विधपूजानिर्णयाध्याये—

"वैदिकैस्तान्त्रिकैर्वापि श्रौतैर्वापि द्विजोत्तम[1] ।
स्वयंव्यक्ते तु भवने मिश्रैर्वा देवमर्चयेत् ॥
ऋष्यादिपूजिते स्थाने पारम्पर्यक्रमं विना ।
विशेषं नाचरेत् किञ्चिद्राजराष्ट्रसमृद्धये " ॥ इति ।

अस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्यायेऽप्येतावेव श्लोकौ पठितौ । तत्रैव—

"यद्बिम्बं येन शास्त्रेण समारब्धं पुरा द्विज ।
प्रासादं[2] वा ततस्तेन शास्त्रेणैव समर्चयेत्[3] ॥
तच्छास्त्रमन्तरेणैव यो यजेदन्यवर्त्मना ।
राज्ञो राष्ट्रस्य कर्तुश्च स नाशं[4] कर्तुमिच्छति ॥
न कदाचिदपि प्राज्ञः प्रकुर्याच्छास्त्रसङ्करम् ।
शास्त्रसङ्करदोषेण महान् दोषो भवेद्ध्रुवम् " ॥ इति ।

[1] श्रौतैर्वा द्विजसत्तम —ज

[2] प्रासाद इति तु सम्यक्, प्रासादमित्येव तु सर्वत्र पाठः.

[3] तदर्चयेत्—घ, छ, ज

[4] विनाश—क, ख, ग, घ, ङ, झ

यद्यपि वैखानस-पञ्चरात्रसङ्करपरिहारस्याप्यत्रैव शास्त्रे प्रतिपादनात् तत्परिहारार्थमिदं वचनमिति वक्तुं शक्यम् , तथापि 'येन शास्त्रेण' इति सामान्यवचनात् सर्वविषयमेव । यत्तत्रोक्तम्—

"महोत्सवेषु सर्वेषु देशकालानुसारतः[1] ।
ऊहापोहविधानेन करणीयं समर्चनम्" ॥ इति ।

इदमपि देशकालद्रव्यबलाद्यनुसारेण तत्तदुचितवैदिकादिसङ्कोचविस्तारादिमात्रविषयम् । अत एव ह्यत्र 'वैदिकैस्तान्त्रिकैः' इत्यादि पुनः पठित्वा,

"ऋष्यादिपूजिते स्थाने पारम्पर्यक्रमं विना ।
विशेषं नाचरेत् किंचिद्राजराष्ट्रसमृद्धये" ॥

इति निगम्यते[2] ।

वैखानसेन पाञ्चरात्रस्य सङ्करे दोषः । पाञ्चरात्रं तु सर्वोपजीव्यम् ।

एवं पञ्चरात्राख्यैकशास्त्रावान्तरसंहितासङ्करस्यात्यन्तगर्हितत्वे वैखानस-पञ्चरात्रसङ्करः कैमुत्यनिषिद्धः[3] । परस्परं च द्वयोरपि स्पष्टं प्रतिषिध्यते । पञ्चरात्रस्य तु वैखानसैरपि क्वचित्क्वचिदुपजीव्यत्वमस्ति । तथा हि—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ।
सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः" ॥

[1] देशिकेन्द्रानुसारतः—क, ख, ग, च, छ, ज, झ.
[2] इति चोच्यते—क, ख, ग, ङ, झ
[3] कैमुतिकन्यायसिद्धः—क, ख, ग, ङ, झ

इत्यादिभिरविशेषेण सर्वेषा ब्राह्मणादीना श्रीपाञ्चरात्रोक्तमार्गेण[1] भगवदर्चनादिक कर्तव्यमिति महाभारतादिष्वभिधीयते । न हि कचिदपि सूत्रविशेषादिनियम कृत । प्रत्युत [2]सर्वसूत्रनिष्ठाना तदन्वयस्तस्मिन्नेव शास्त्रे प्रतिपाद्यते ।

"निषेकाद्यैश्च संस्कारान् स्वसूत्रोक्तान् समाचरेत् ।
पञ्चरात्रोदितान् वापि ये स्ववश्यैरनुष्ठिता" ॥ इति ।

न च बोधायन-विखन शौनकाद्युक्तेषु भगवत्प्रतिष्ठार्चनादिषु सत्सु किमन्येनेति वाच्यम् । तदुक्तिरहितसूत्रनिष्ठानामन्यापेक्षाया साधारणशास्त्रपरिग्रहोपपत्ते । [3]न च कचित् पूर्णोपदेशे सम्भवति तच्छक्तस्यापूर्णमुपादातु[4] युक्तम् । अत एव हि हौत्र होतृशाखोक्तमध्वर्यवोऽपि परिगृह्णन्ति । अतो येषु सूत्रेषु भगवदर्चनादिक प्रत्यपादि तन्निष्ठानामपि भगवच्छास्त्रोक्तप्रक्रियया समाराधनादिकं प्रशस्ततमम् । तथा च शिष्टैरनुष्ठीयते ।

ननु च वैखानससूत्रानुसारिषु काश्यप[5]-मरीचि-भार्गवात्रेयेषु शास्त्रेषु तदनुबन्धिषु चाधिकारग्रन्थेषु सग्रह-विस्ताररूपेषु भगवत्प्रतिष्ठार्चनादिकं पूर्णमुपदिशत्सु कि पञ्चरात्रेण । मैवम् । तत्सूत्रनिष्ठान् प्रत्येव तत्प्रक्रियोपदेशात । तर्हि तन्निष्ठाना पञ्चरात्रप्रक्रियाया अनुपादेयत्वे तस्या सर्वसूत्र निष्ठसाधारण्य भज्येतेति चेत्तन्न । उक्तोत्तरत्वात्[6] । काश्यपीयादीन्यपि [7]हि

[1] श्रीमत्पञ्चरात्र—घ, छ, ज
[2] सर्व—क, ख, ग कोशेषु नास्ति
[3] न कचित् पूर्णोपदेश सभवतीति तच्छक्तस्य पूर्णोपादान—क ख ग, च, झ
[4] अपूर्णोपादान—ख
[5] काश्यपीय—घ, ज
[6] दत्तोत्तरत्वात्—क, च, ज, झ.
[7] हि—क, ख, घ, च, झ, कोशेषु नास्ति

शास्त्राणि काचित् प्रक्रियामुपदिशन्ति तेषु तेष्वर्थेषु शास्त्रान्तरोपजीवीन्येव, एव पञ्चरात्रोक्तमपि क्वचित्क्वचिदुपजीवन्ति। यथोक्तं भृगुप्रोक्तक्रियाधिकारे—

"गुरूपदेशसंसिद्धैः कल्पमन्त्रैरथापि वा।
आसनाद्युपचारैस्तु पूजयेदिति केचन"॥ इति।

अत्र कल्पमन्त्रशब्देन भगवच्छास्त्रोक्तमन्त्राणामेव ग्रहणम्। अत एव हि अधीतवेदान् वैखानसान् प्रति 'गुरूपदेशसंसिद्धैः' इति विशेष्यते। न च तत्तन्मन्त्रकल्पाः पञ्चरात्रतन्त्रेभ्यः पृथग्भूताः। चतुर्धा व्यूढे हि तस्मिन् शास्त्रे प्रत्येकं च संहिताभेदभेदिनि सर्वेऽपि भगवन्मन्त्रकल्पास्त-दङ्गमन्त्रकल्पाश्च यथायथं समाविशन्ति। अत एव हि तांस्तान् भगवन्मन्त्र-कल्पान् आर्षपचरात्रमित्यभियुक्ता व्यवहरन्ति[1]। तन्निष्ठाश्च कल्पभागवत शब्देन व्यपदिशन्ति। एवं भार्गवादिष्वपि।

"वैखानसेन सूत्रेण निषेकादिक्रियान्वितान्।
विप्रान् वेदविदः शुद्धान् मन्त्रकल्पविचक्षणान्"॥

इत्यादिषु मन्त्रकल्पवेदनोक्तिस्तत्र तत्रापेक्षितग्रहणार्था। तथा भार्गवे क्रियाधिकारे सारस्वतप्रतिष्ठादिकं प्रक्रम्योच्यते 'अनेन विधिना स्थाप्य कल्पमन्त्रेण पूजयेत्' इति। न चात्र कल्पमन्त्रस्वरूपतदङ्गादिकमुप-दिष्टम्। अतः कल्पोक्तप्रक्रियैवात्रानुसरणीया। एवं तत्र सुदर्शनरूपस्य भगवतः प्रतिष्ठार्चनादौ प्रक्रान्ते फलभेदापेक्षया प्रक्रियान्तरमुपक्षिप्यते—

"एतद्वैदिकमुद्दिष्टं भुक्तिमुक्तिफलप्रदम्।
केवलं भुक्तिकामश्चेत्[2] स्मरेन्मन्त्रं षडक्षरम्"॥ इति।

[1] वर्णयन्ति—क, ख, ग, च, ज, झ

[2] मुक्तिकाम इति तु उचितम्

न चात्र षडक्षरमन्त्रप्रक्रियाया प्रपञ्चनम् । ततश्च वासिष्ठ-गार्ग्य-विहगेन्द्राहिर्बुध्न्यादिसंहितोक्तप्रक्रियैव शरणम् । एव द्विभुजप्रभृतिषोडश-भुजपर्यन्तरूपोपदेशेऽपि[1] अनुक्तमप्यपेक्षितमन्यतो ग्राह्यम् । अत एव हि "कृष्णरूपाण्यनन्तानि[2]" इत्यादिभि कृष्ण-नरसिंहादिरूपाणामसंख्येयत्वेन वक्तुमशक्यतया विरम्यते । तेषु च [3]कानिचिच्छास्त्रान्तरोक्तानि संग्राह्या-ण्येव । अत इदं 'वेदान्तेषु यथासारं सगृह्य भगवान् हरि ' इत्युक्तप्र-क्रियया सर्ववेदान्तसारोद्धारेण सर्वजनहितैषिणा भगवता स्वयमेव प्रणीतं श्रीमत्पञ्चरात्रशास्त्र सर्वसूत्रनिष्ठानामुपजीव्यमिति सिद्धम् ।

यत्तु श्रीवैखानसे—

**वैखानस पाञ्चरात्रयो परस्परनिन्दावचनाना प्रक्षिप्तत्वपक्ष ।**

"आग्नेयं पञ्चरात्र तु दीक्षायुक्तं च तान्त्रिकम् ।
अवैदिकत्वात्तत्तन्त्रं तथा वैखानसे न तु ।
सौम्येन वैदिकेनैव देवदेव समर्चयेत्" ॥

इत्यादि, यच्चोक्तम् श्रीपाञ्चरात्रे तन्त्रसारसमुच्चये—"अश्रीकरमसौम्यं च वैखानसमसात्त्विकम्[4]" इत्यारभ्य, "तद्विधानं परित्यज्य पञ्चरात्रेण पूज-येत्" इत्यादि यानि च पाद्म-पारमेश्वरादिष्वतिवादवचनानि तानि नूनं

[1] अपि—घ कोशे नास्ति
[2] असङ्ख्यानि—घ
[3] केषुचित्—क, ख, ग
[4] अतात्त्विकम्—क, ख, ग, ङ

इक्षुभक्षणचिकीर्षुभि[1] प्रक्षिप्तानि परस्परस्थानाक्रमणलोलुपैर्वटुभिर्वा[2] पूजकाधर्मनिवेशितानि ।

अविरोधोपयोगाभ्यामुभयोरपि शास्त्रयो· ।
मध्यस्थैर्हि कृत धर्मविद्यास्थाननिवेशनम्[3] ॥

अन्यथा प्रसिद्धप्रामाण्ययो[4] परिग्रहप्राचुर्यवतो प्रसिद्धतरेषु श्रीरङ्ग-श्रीमद्वेङ्कटाद्रि-श्रीहस्तिशैल-वृषभगिरिप्रभृतिषु पारम्पर्येण प्रवृत्तयो व्यासादिनिबद्ध-श्रीवैष्णवधर्मशास्त्रकाण्डादिषु[5]

"कथ त्वमर्चनीयोऽसि मूर्तय कीदृशास्तु ते ।
वैखानसा कथ ब्रूयु कथं वा पाञ्चरात्रिका ॥

भगवानुवाच—

शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मन ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥
अष्टाक्षरविधानेनाप्यथवा द्वादशाक्षरै ।
वैदिकैरथवा मन्त्रैर्मम सूक्तेन वा पुन ॥
स्थापित मा ततस्तस्मिन्नर्चयित्वा विचक्षण ।
पुरुष तु तत सत्यमच्युत च युधिष्ठिर ॥
अनिरुद्ध च मा प्राहुर्वैखानसविदो जना· ।
अन्ये त्वेवं विजानन्ति मा राजन् पाञ्चरात्रिका ॥

[1] इक्षुभक्षकर्तृचिकीर्षुभि —क, ख, ग, घ
[2] पटुभिर्वा—ज
[3] निवेशनम् । इति—क, ख, ग, च
[4] प्रसिद्धप्रामाण्ययो —ख, ग कोशयो नास्ति
[5] धर्मशास्त्रकर्मकाण्डादिषु—ज.

वासुदेवं च राजेन्द्र सङ्कर्षणमथापि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥
एता अन्याश्च राजेन्द्र सञ्ज्ञाभेदेन मूर्तयः ।
विद्ध्यनर्थान्तरा एव मामेव चार्चयेद्बुधः ” ॥

इत्यादिभिः वैष्णवशास्त्रभेदत्वेन समपरिपठितयोर्वेदाविरुद्धयोः भगवद्या-मुनमुनि-वासुदेवस्वामिप्रभृतिभिः स्थापितप्रामाण्ययोरविशेषवैष्णवसमयपरि-ग्रहयोः श्रीमत्पञ्चरात्र[1]-वैखानसशास्त्रयोः द्वयोरप्यप्रामाण्यप्रसङ्गात् ।

परस्परनिन्दावचनानि स्वशास्त्रप्रशंसापराणि ।

अथैतानि परम्परापकर्षवचनानि असङ्कीर्णबहुकोशपाठावलोकनादाप्त-भाषितानीति मन्येमहि, तथापि ‘प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् ” इत्यादिषु उदितहोमप्रशंसार्था[2]नुदितहोमनिन्दावत्[3] प्रक्रान्तशास्त्र प्राशस्त्यप्रतिपादनपरत्वेन[4] नेतव्यानि । न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु निन्द्यादितरत् प्रशंसितुम् ’ इति न्यायविदः ।

एवमेव साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्र-मधीतवान् ’ इत्यादौ वेदनिन्दाप्रसङ्गेन वेदविरोधमाशङ्क्य स्वशास्त्रप्रशंसादि-परत्वेन पर्यहारि भाष्यकारैः न्यदर्शि च ‘ ऋग्वेदं भगवोऽध्येमि ’ इत्यारभ्य ‘सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् ’ इति भूमविद्योपक्रमगतस्य तदितरसमस्तवेदाध्ययनादात्मवेदनालाभवचनस्य भूमविद्याप्रशंसामात्रे ता-त्पर्यम् । अपि च—

[1] श्रीपञ्चरात्र—क, च
[2] प्रशंसार्थ—क, च
[3] निन्दादिवत्—घ, छ, ज
[4] प्राशस्त्यमात्रपरत्वेन—घ, छ, ज

"चत्वार एकतो वेदा भारतं चैकमेकतः ।
समागतैः सुरर्षिभिस्तुलामारोपितं पुरा ॥
महत्त्वे च गुरुत्वे च ध्रियमाणे [1]ततोऽधिकम् ।
महत्त्वाच्च गुरुत्वाच्च महाभारतमीरितम् [2]" ॥

इत्यादिवचनानि वेदेभ्योऽपि महाभारतस्याधिक्यं ब्रुवाणानि वेदार्थोपबृंहणरूपातिशयशालिमहाभारतप्रशंसार्थानि । न पुनर्वेदानामपकर्षगन्धमभिदधते । किं च बह्वृचाम्नाये "ऋग्गाथा कुम्ब्या तन्मितं यजुर्निगदो वृथा वाक्तदमितं सामाधो यः कश्च गेष्णः" इति यजुरादिनिन्दा ऋग्वेदस्तुत्यर्थैव । एवमिहापि श्रीवैखानस-पञ्चरात्रयोः परस्परापकर्षवचनानामाप्तत्वेऽपि स्वाभिमतस्तुत्यर्थतयैव निर्वोढव्यम् । अन्यथा सर्वोपप्लवप्रसङ्गात् । अविस्रम्भणीयवचनानां यथाश्रुतस्वीकारेऽतिप्रसङ्गाच्च ।

एवमिव[3] हि शैवागमे कारणतन्त्रे जल्प्यते[4]—

**शैवागमकारणतन्त्रवचनानामपि स्वशास्त्रप्रशंसापरत्वम् ।**

"शैवः सर्वाधिकारी स्यात् स्वकीये च परत्र च ।
शैवाः सर्वं प्रकुर्वन्ति ये गृहस्था द्विजोत्तमाः ॥
यामले मातृतन्त्रे च कापाले पञ्चरात्रके ।
बौद्धे वाप्यार्हते चैव लागुडे वैदिकेऽपि च ॥
अन्येष्वपि च मार्गेषु तत्तच्छास्त्रानुसारतः ।
शैवाः सर्वं प्रकुर्वन्ति तल्लिङ्गस्थापनादिकम् ॥

[1] यतो—घ, ङ, छ, ज
[2] उच्यते—घ
[3] एवमेव—क, ख, ग, च
[4] कथ्यते—क, ख, ग, च

मुख्यत्वादिह शैवस्य मुख्यमाहात्म्यतोऽपि च ।
अधिकारोऽस्ति सर्वत्र नान्येषा शिवदर्शने" ॥ इति ।

ननु पाशुपताधिकरणे 'पत्युरसामञ्जस्यात्' इति पशुपतिप्रणीताना शैवादीना सर्वेषा तन्त्राणामप्रामाण्यसमर्थनात् एतस्मिन्नपि वचने "जिनालय[1] प्रविष्टस्तु सवासा जलमाविशेत" इत्यादिभिर्दर्शनस्पर्शनाद्ययोग्य-[2]विषयजैन-यामल बौद्धादिबाह्यमततन्त्रै[3] सह वैदिकस्य समभिव्याहारात् वैदिकानर्हेषु बाह्येषु च शैवस्याधिकारोक्ते ।

"शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत" ॥

इति विज्ञानेश्वरसंगृहीतधर्मशास्त्रवचनेन स्पर्शादिषु परिहरणीयत्वेन प्रसिद्धस्य शैवस्य वैदिकदेवताप्रतिष्ठादिषु मुख्याधिकारित्वजल्पनात्[4] लोके च शैवे क्वचिदपि[5] भगवत्प्रतिष्ठाद्यनुमत्यभावात् तत्स्पर्शादिष्वपि—

"स्थापिते पञ्चरात्रेण देवे[6] षड्भि शिवाध्वभि[7] ।
प्रतिष्ठादौ कृते मोहाद्दोष सर्वक्षयात्मक ॥
शान्तिश्च तस्य भूयोऽपि पञ्चरात्रोक्तवर्त्मना ।
प्रतिष्ठाप्य सहस्रेण कलशै स्नपन हरे ।
महोत्सवश्च कर्तव्यो ध्वजारोहणपूर्वकम्" ॥

[1] जेना—क, ख, ग, च
[2] विषय—क, ख, ग कोशेषु नास्ति
[3] बौद्धबाह्यादितन्त्रै —क, ख, ग, च, झ
[4] कल्पनात्—क, ख, ग, च
[5] शैवे कदाचिदपि—क, ख, ग, झ.
[6] देवै —क, ख, ग, च, ज, झ
[7] शिवादिभि —क, च, शिवार्थिभि —ख, ग, झ

इति पाद्मादिप्रतिपादितप्रायश्चित्तविशेषानुष्ठानदर्शनाच्च शैवस्तुतिवचन-स्यास्य—

" त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ।
दर्शयित्वाल्पमायासं फलं शीघ्रं प्रदर्शय " ॥

इत्यादिप्रकारेणाप्रामाण्यमनीश्वरप्रक्षिप्तत्वमतिवादरूपतया स्वीयतन्त्राधिकारि शैवस्तुतिमात्ररूपत्वं वा कल्पनीयमिति चेत्, हन्त तर्हि अनयोरपि श्री वैष्णवमार्गभेदयोरन्यतरस्येतरत्र शिष्टैः[1] प्रवेशनात् परस्परसङ्करप्रसङ्गे च तत्त-त्तन्त्रोक्तप्रायश्चित्तानुष्ठानदर्शनाच्च परस्परापकर्ष-परस्परमर्यादाप्रवेशनवचनानि प्रक्षिप्तत्वादप्रमाणानि अतिवादरूपतया स्वतन्त्रस्तुतिपराणीति वा[2] निर्वाह्य-त्वात् परम्परागतमर्यादापरित्यागेन [3]परस्परप्रवेशो न क्षम इति मध्यस्थ-दृष्ट्या सपश्यध्वम् । तत्र पक्षे पतन्तस्तु पतन्त्येव परमधर्ममर्यादोपप्लवात् । अतो वैखानस-पञ्चरात्रयोः पञ्चरात्रावान्तरभेदचतुष्कस्य तत्तदवान्तरतन्त्र-भेदानां च परस्परमसङ्करेणैव सर्वदा स्थितिरिति सिद्धम् ।

अपकृष्टसिद्धान्तत्यागेनापि उत्कृष्टसिद्धान्त-प्रवेशकवचनानां प्रक्षिप्तत्वपक्षः ।

तत्रेदं तु किञ्चिद्विमर्शनीयम् । यत्त[4]त्पारमेश्वर-कालोत्तरयोः प्रमाण-भूतानामेव भगवच्छास्त्र[5]सिद्धान्तानामाकारान्तरेणो-त्कर्षापकर्षयोगात् प्राक्प्रवृत्तापकृष्टसिद्धान्तपरित्यागे-नापि उत्कृष्टसिद्धान्तप्रवेशनं न दोषाय । प्रत्युत गुणायैव । उत्कृष्टतन्त्रपरित्यागेन निकृष्टतन्त्रप्रवेशने समानतन्त्रसङ्करे च दोष इत्युक्तम् । इदमपि दत्तोत्तरप्रायम् । तथा हि—

[1] इतरतन्त्रप्रविष्टैः—क, च, झ, इतरतन्त्रविशिष्टैः, छ, ज
[2] वा—क, ख, ग, झ कोशेषु नास्ति
[3] परस्परप्रवेशोऽनर्थमयं इति—घ
[4] तत्—घ, छ, ज पुस्तकेषु नास्ति
[5] भगवच्छास्त्र—क, ख, ग कोशेषु नास्ति.

श्रीसात्त्वते द्वाविंशे परिच्छेदे समयि-पुत्रक-साधक[1]लक्षणोक्त्यनन्तरम् आचार्य-लक्षणे 'साङ्कर्यमागमानां च वेत्ति वाक्यवशात्तु यः' इत्युक्त्वा, शास्त्र-सङ्करशोधनार्थमनन्तरमुच्यते—

"तत्र वै त्रिविधं वाक्यं दिव्यं च मुनिभाषितम् ।
पौरुषं चारविन्दाक्ष तद्भेदमवधारय ॥
यदर्थाढ्यमसन्दिग्धं [2]स्वच्छमल्पाक्षरं स्थिरम्[3] ।
तत् **पारमेश्वरं** वाक्यमाज्ञासिद्धं हि मोक्षदम् ॥
प्रशमकं वै सिद्धीनां सम्प्रवर्तकमप्यथ ।
सर्वेषां रञ्जकं [4]गूढनिश्चयीकरणक्षमम् ॥
**मुनिवाक्यं** च तद्विद्धि चतुर्वर्गफलप्रदम् ।
अनर्थकमसंबद्धमल्पार्थं शब्दडम्बरम् ॥
अनिर्वाहकमाद्योक्तेर्वाक्यं तत् **पौरुषं** स्मृतम् ।
हेयं चानर्थसिद्धीनामाकरं नरकावहम् ॥
प्रसिद्धार्थानुवादं यत्सङ्गतार्थं विलक्षणम् ।
अपि चेत् पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत्" ॥ इति ।

अत्र 'अनिर्वाहकमाद्योक्तेः' इति दिव्य-मुनिभाषितयोः विरुद्धार्थत्वमुच्यते । असंबद्धमिति पूर्वापरविरुद्धत्वम् । तदिदमुभयमपि निकृष्टसंहितात्यागेन उत्कृष्टसंहितापरिग्रहवचने श्रीसात्त्वत-पौष्कर-नारदीय-पाद्मादिविरोधात् सा-

[1] समाधिपुत्रकसाधक—घ, समयपुत्रिकासाधन—ग, समयपुत्रकसाधक—क, ख, च, झ

[2] स्वल्प—क, ख, ग

[3] स्मृतम्—क, च स्थितम्—ख, ग

[4] गूट—क, ख, ग, घ, ङ, च, छ, झ

मान्येन सर्वसङ्करनिषेधपर-स्वपूर्वापरग्रन्थविरोधमवधारयन्तो धृष्टबुद्धय कतिचन तन्त्र-तन्त्रान्तरमर्यादाप्रवृत्तस्थानाक्रमणलुब्धागम-मन्त्रसिद्धान्ताभिमानिपुरुषकृतप्रक्षेपोऽयमिति मन्यन्ते ।

अन्ये तु प्रागुक्तन्यायेन मन्त्रसिद्धान्तादिस्तुतिपरतामातिष्ठन्ते । न खल्वेतावता कालेन कल्पारम्भकृतयुगात् प्रभृति सन्तन्यमानेषु सात्त्वतशास्त्रसहितास्रोतोभेदेषु अपकृष्टसहिता परित्यज्योत्कृष्टसहिता कश्चित् परिजग्राहेति महाभारते श्रीमद्वराहपुराणादिषु वा परश्शतेषु पञ्चरात्रप्रस्तावेषु महर्षय सूचयन्ति । न चार्वाचीनैरप्याचार्यैरित पूर्वं तथा कृतमिति सप्रदायविद शिष्टा विदामासु । अत शिष्टानुष्ठानबलादेव स्तुतिपरत्वम व्यवस्याम । यदि चैव शास्त्रार्थ स्यादेतावता कालेन तन्त्र-तन्त्रान्तरस्थानानि सर्वाणि मन्त्रसिद्धान्तादिना व्याप्येरन् । इत पूर्वमनुवृत्तावपि परस्तादेतद्वलावलम्बनेन तन्त्र-तन्त्रान्तरसिद्धान्तयो सर्वत्रोच्छेद प्रसज्येत । अथ चेदैहिकभोगादिप्राचुर्यात् पुरुषाणा च त्रिवर्गप्रावण्यातिशयात् तन्त्र-तन्त्रान्तरयो सर्वत्रानुवृत्ति सभवतीति मन्वीथा , तर्हि [1]राज-राष्ट्रसमृद्ध्यर्थेषु स्थानेष्वैहिकफलप्रचुरयोरेव तन्त्र तन्त्रान्तरयोर्यथापूर्वमवस्थानमुचितम् । न हि राजसु राष्ट्रेषु वा सुलभा. केवलमुमुक्षव ।

उत्कृष्टसिद्धान्तस्वीकारवचनाना मन्त्रसिद्धान्त स्तुतिपरत्वपक्ष ।

श्रीकरसहिताया च प्रागुक्तस्यैव सिद्धान्तचतुष्टयस्य वेदसिद्धान्तो दिव्यसिद्धान्तस्तन्त्रसिद्धान्त पुराणसिद्धान्त इति प्रागुक्तादूरविप्रकृष्टैर्नामभेदैर्विभागमुक्त्वा पुराणसिद्धान्तसञ्ज्ञितस्य तन्त्रान्तरसिद्धान्तस्य मोक्षप्रदस्यापि विशेषत· श्रीकरत्वमुक्तम् ।

तन्त्रान्तरसिद्धान्तस्य श्रीकरत्व मोक्षप्रदत्व च ।

[1] राज—घ कोशे नास्ति

"एतत् पुराणसिद्धान्तं श्रीकरं च विशेषतः ।
इदं श्रीकरसंज्ञाख्यं भोगमोक्षफलप्रदम्" ॥ इति ।

अस्य च पूर्वापरं सर्वं सन्मार्गदीपिकायां विस्तरेण द्रष्टव्यम्। भोगमोक्षफलप्रदमित्यस्य श्रीकरसज्ञसंहिताविशेषान्वितत्वेऽपि तस्याः संहितायाः पुराणसिद्धान्तान्तःपातित्वात् विशेषत इति[1] नियमात्, चकारेणानुक्तसमुच्चयाच्च कृत्स्नस्यापि तन्त्रान्तरसिद्धान्तस्य विशेषतः श्रीकरत्वं मोक्षप्रदत्वं च सिद्धम् । श्रीकामाश्च प्रायशो हि राजानो राष्ट्रवर्तिनश्चेति तत्समृध्यर्थेषु साधारणस्थानेषु तन्त्रान्तरसिद्धान्तस्यौचित्यमधिकम् । निःसङ्गास्तु स्वगृहादिषु आगमसिद्धान्तादिमर्यादामनुतिष्ठन्तु नाम । अतस्तन्त्र-तन्त्रान्तरस्थानेषु अन्यसिद्धान्तावतरणवचनमपवर्गप्रत्यासत्त्यतिशयनिबन्धनप्राशस्त्याधिक्यपरमिति मन्तव्यम् । तदपेक्षयैवेदमुक्तं कालोत्तरे—"स्वयं व्यक्तं तथा दिव्यमुत्कृष्टफलदं यतः" इति ।

अपरे त्वाहुः—व्यवस्थितस्थानविषयमेवेदं[2] अपकृष्टसंहितात्यागेनोत्कृष्टसंहितापरिग्रहवचनमिति । तथा हि । यदुक्तं कालोत्तरे—

**उत्कृष्टसिद्धान्तस्वीकारवचनानां स्वयंव्यक्तस्थानविषयत्वपक्षः ।**

"अनेकभेदभिन्नं च पञ्चरात्राख्यमागमम् ।
पूर्वमागमसिद्धान्तं[3] मन्त्राख्यं तदनन्तरम् ।
तन्त्रं तन्त्रान्तरं चेति चतुर्धा परिकीर्तितम्" ॥

[1] विशेष इति—क, ख, ग, च
[2] एवेदं—क, ख, ग, च, छ, ज, झ कोशेषु नास्ति.
[3] आगमसिद्धान्तशब्दौ नपुंसकान्तावेव सर्वत्र दृश्येते

इति चतुर्धा विभाग सामान्येन प्रतिपाद्य, ' [1]नारायणीयमौदध्यमाम्निकाश्य-पसज्ञितम्' इत्यादिना 'शास्त्राण्येतानि सुव्रत' इत्यन्तेनागमादिसिद्धान्तेषु चतुर्षु कतिपयसहिताना [2]निवेशनमनुक्तानामपि संहितानामुपलक्षणतयोदाहृत्य, "एतद्वै पञ्चरात्राख्य शास्त्र सर्वोत्तमोत्तमम्' इति चतुर्विधमपि पञ्चरात्रशास्त्र सर्वोत्तमोत्तमत्वेन निगम्य

**आगमादिसिद्धान्ताना स्वयव्यक्तादिनाम्नापि निर्देश ।**

'चतुर्धा भेदभिन्न च स्वयव्यक्तादिभेदत ।
स्वयव्यक्तं हि सिद्धान्तमागमाख्य पुरोदितम् ।
मन्त्रसिद्धान्तसज्ञ यत्तद्दिव्य परिकीर्तितम्'' ॥

'तन्त्रसज्ञ हि यच्छास्त्र तत् सैद्ध समुदाहृतम् ।
तन्त्रान्तर तु यत्प्रोक्तमार्ष तत समुदाहृतम्'' ॥

इति प्रागुक्तानामेवागमसिद्धान्तादीना[3] स्वयव्यक्त-दिव्य-सैद्धार्षरूपेण वक्ष्यमाणोपयोगिसज्ञान्तराणि निर्दिश्य,

''स्वयव्यक्तेन दिव्येन पूज्यमाने तु कौतुके[4] ।
तन्त्र तन्त्रान्तराभ्या तु न कुर्याद्देवपूजनम् ॥
पूज्यते यदि समोहात् स्थाननाशो भवेद्ध्रुवम् ।
राज्ञो राष्ट्रस्य कर्तुश्च मरणं जायते ध्रुवम् ॥

[1] नारायणीय मौदध्यमम्नि—घ, नारायणीयमौद्गल्यमानि—क, ख, ग, ञ

[2] निदर्शन—क, ख, ग, च

[3] प्रागुक्तानामेव सिद्धान्ताना—क, प्रागुक्तानामेव सिद्धान्तादीना—ख, ग

[4] कौतुकात्—क, ञ (स्वयव्यक्तेन इत्यारभ्य सार्धश्लोकद्वय ख, ग पुस्तकयो न दृश्यते )

तस्मात् पूजा न कर्तव्या तन्त्र-तन्त्रान्तराध्वना ।
अनुक्तं यत् स्वयंव्यक्ते दिव्ये शास्त्रे द्विजोत्तम[1] ॥
यत्किंचित् तत्तदादेयं तन्त्र-तन्त्रान्तरे यथा[2] ।
तन्त्र-तन्त्रान्तरोक्तेन पूज्यमानेऽपि देशिकै ॥
तद्विधान् परित्यज्य स्वयव्यक्तोक्तवर्त्मना ।
दिव्योक्तविधिना कार्यं पूजन प्रतिमासु च[3] " ॥

"स्वयव्यक्त तथा दिव्यमुत्कृष्टफलदं यत ।
तस्मादुत्कृष्टशास्त्रोक्तमार्गेणैव सुपूजयेत्" ॥

इति तन्त्र-तन्त्रान्तराभ्या पूज्यमानेऽपि तद्विधान परित्यज्य उत्कृष्टफलदत्वेन उत्कृष्टेन स्वयव्यक्तेन दिव्येन च शास्त्रेण पूजन युक्तमिति ।

**उत्कृष्टसिद्धान्तस्वीकारवचनाना स्वयव्यक्तस्थानविषयत्वम् ।**

तदिदं सर्वस्थानविषय प्रतिनियतस्थानविषयं वेति विचारणीयम् । यदि सर्वस्थान[4]विषय तदा परिगृहीततमसात्त्वताद्यनेकसहिताग्रन्थसङ्कोच प्रसज्येत । अपि चास्मिन्नेवोत्तरत्र स्वयव्यक्तादिस्थानलक्षणनिरूपणाध्याये तत्तत्स्थानलक्षणमुक्त्वा पश्चाच्चतुर्विधपूजानिर्णयाध्याये चतुर्विधपूजनस्य, यथाक्रमं 'वैदिक तान्त्रिक श्रौत मिश्र चेति चतुर्विधम्' इति प्रक्रम्य, मूलश्रुतिदिव्यमन्त्रप्रवृत्तश्रुति-तत्सम्भेदनिमित्तनामधेयानि प्रतिपाद्यानन्तरमुच्यते—

[1] स्वव्यव्यक्ते च दिव्ये च सैद्धे चार्षे द्विजोतम—क, ख, ग
[2] तथा—क, ख, ग, झ
[3] प्रतिमासु च—इति ।—क, ख, ग, च, झ
[4] स्थान—ड, छ, ज कोशेषु नास्ति

"वैदिकैस्तान्त्रिकैर्वापि श्रौतैर्वा द्विजसत्तम ।
स्वयव्यक्ते तु भवने मिश्रैर्वा देवमर्चयेत् ॥
ऋष्यादिपूजिते स्थाने पारम्पर्यक्रम विना ।
विशेषं नाचरेत् किचिद्राज-राष्ट्रसमृद्धये" ॥ इति

अत्र स्वयव्यक्तस्थाने चतुर्णा पूजाविशेषाणा यथारुचि विकल्पेन परिग्रहं प्रतिपाद्य, ऋष्यादिपूजितेषु स्थानान्तरेषु पारम्पर्यक्रममन्तरेण मात्रयापि "विशेषं नाचरेत्" इत्युक्तत्वात यत्र[1] स्वयव्यक्ते विकल्पेन कर्मणा प्रवृत्ति सभवति[2] तत्रैवापकृष्टफलशास्त्रपरित्यागेन उत्कृष्टफलशास्त्रपरिग्रहवचनं लिङ्गव-शान्नेतव्यम् । पवित्र दक्षिणे कर्णे इति लिङ्गात् "दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र" इत्यस्य स्थाननियमवत् प्रतिनियतस्वयव्यक्तेषु स्थानेष्विति व्यक्तमवसीयते । अस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्यायेऽपि 'वैदिकैस्तान्त्रिकैर्वा' इत्यादि श्लोकद्वय पुन पठितम् । 'मानुषे भवने देव तन्त्रमार्गेण पूजयेत्' इति चोक्तम् । पुनश्च—

"यद्बिम्ब येन शास्त्रेण समारब्ध पुरा द्विज ।
प्रासाद वा ततस्तेन शास्त्रेणैव तदर्चयेत् ॥
तच्छास्त्रमन्तरेणैव यो यजेदन्यवर्त्मना ।
राज्ञो राष्ट्रस्य कर्तुश्च स नाश कर्तुमिच्छति ॥
न कदाचिदपि प्राज्ञ· प्रकुर्याच्छास्त्रसङ्करम् ।
शास्त्रसङ्करदोषेण महान् दोषो भवेद्ध्रुवम्" ॥

[1] यत्र—क, ख, ग कोशेषु नास्ति.
[2] सभवतीति—क, ग.

इत्युक्तम् । अतोऽप्यत्रापकृष्टशास्त्रपरित्यागेन उत्कृष्टशास्त्रपरिग्रहवचन म्वेनैव नानाशास्त्रार्थविकल्पयोग्यत्वेन प्रतिपादित स्वयंव्यक्ते स्थाने स्थापनीयमिति सिद्धम् ।

यदपि चात्र स्थानविशेषमधिकृत्य शास्त्राधिकारिणोर्नियम क्रियते[1]---

**स्थानविशेषमधिकृत्य शास्त्राधिकारिणो नियमपराणां वचनानाम् अर्थविचार ।**

" स्वयंव्यक्ते तथा दिव्ये दिव्यशास्त्रोक्तवर्त्मना ।
मूलागमसमेतेन मुख्यैर्भागवतै सदा ॥
पूजन प्रयतै कार्यं पञ्चकालपरायणै ।
वैष्णवायतने कार्य केवलै पाञ्चरात्रिकै ॥
सान्तानिकै प्रविष्टैर्वा मुनिवाक्योक्तवर्त्मना ।
अनुक्तान्यर्थजालानि सिद्धान्तेष्वागमादिषु ।
अन्योन्यापेक्षया ग्राह्यं शास्त्रेष्वन्यत्र चाहरेत् " ॥ इति ।

एतदपि प्रकृष्टस्थाने प्रकृष्टाधिकारिणा प्रकृष्टशास्त्रादिपरिग्रहौ[2]चित्यमपकृष्टस्थानेऽपकृष्टाधिकारिणामपकृष्टशास्त्रादियोग्यत्व च स्थापयति । अन्यथा वैष्णवायतने क्वचिदपि दिव्यशास्त्रानवतारप्रसङ्गात् । मानुषेऽपि भवने मुख्याधिकारिभि प्रतिष्ठिते दिव्यशास्त्रेण पूजनादिकर्तव्यत्वस्य पारमेश्वरनिरूपणे दर्शयिष्यमाणत्वाच्च । अत्रापि सिद्धान्तसङ्करपरिहार एव ' अनुक्तान्यर्थजालानि ' इत्यादिना स्थापित ।

[1] शास्त्राधिकारिण —क, ख, ग, च
[2] शास्त्रपरिग्रह—क, ख, ग, च, झ

यत्पुन· पारमेश्वरे स्वयव्यक्तनिर्णयाध्याये—

**दिव्यशास्त्रेण पूज-नस्य सर्वत्र सभव ।**

"स्वयंव्यक्त तथा सिद्ध विबुधैश्च[1] प्रतिष्ठितम् ।
मुनिमुख्यैश्च[2] गन्धर्वैर्यक्षैर्विद्याधरैरपि ॥
रक्षोभिरधमैर्मुख्यै स्थापित मन्त्रविग्रहम् ।
दिव्यशास्त्रोक्तविधिना पूजयेच्छास्त्रकोविद " ॥ इति ।

इदमपि दिव्यशास्त्रस्य सर्वस्थानेषु सभव[3] दर्शयति । न तु शास्त्रान्तर-परित्यागेन दिव्यप्रवेशम् ।

[4]यच्चानन्तरमुक्तम्—

"स्थापित मनुजैर्देव मुनिवाक्येन यत्र तु ।
पूजयेद्द्विज तत्रापि ज्ञानिभिस्तत्त्वदर्शिभि ।
वासुदेवैकनिष्ठैस्तु देवतान्तरवर्जितै " ॥ इति ।

इदं च व्यामिश्रमुनिवाक्यस्थापितेऽपि[5] स्थाने व्यामिश्रयागमुक्तैर्वासु-देवैकनिष्ठै पूजनमात्र प्रशस्तमित्याह । न पुनर्मुनिवाक्यपरित्यागेना[6]-स्वाधिकाराननुगुणोत्कृष्टशास्त्रेण पूजनं विदधाति । प्राक्प्रवृत्तशास्त्रानु-

[1] सिद्धविबुधैश्च—क, ख, ग, च
[2] मुख्यैस्तु—ख, च, छ, ज, झ.
[3] समभाव—ख, ग, सद्भाव—घ, ङ, च, छ, ज
[4] यत्वनन्तर—क, ख, ग, च
[5] अपि—क, ख, ग, च कोशेषु नास्ति
[6] परित्यागेन स्वाधिकारानुगुण—घ, ङ, च, छ, ज

सारेण तैरपि तत्र पूजनस्य युक्तत्वात् । उत्कृष्टशास्त्रनिष्ठानामप्यपकृष्ट-शास्त्रधर्मेषु लोकानुग्रहार्थे[1] प्रवृत्ते संहितान्तरादिसिद्धत्वस्य प्रागेव दर्शितत्वात् ।

यच्चेदमनन्तरमभिधीयते—

“ व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितै ।
स्थापित मनुजेन्द्रैस्तु निषद्धाकादिकोविदै ।
अर्चयेद्देवदेवेश दिव्यशास्त्रोक्तवर्त्मना ” ।। इति ।

इदमपि दिव्यशास्त्रेण स्थापितस्थानविषयमनुसन्धेयम् ।

इदं त्ववशिष्यते । यदुक्तम्—

**मुनिवाक्यपरित्याग-पूर्वकदिव्यमार्ग-परिग्रहवचनस्य दिव्यमार्गप्रश-सापरत्वम् ।**

“ मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते ।
तत्रापि दिव्यमार्गाच्चेत् पूजनं कर्तुमिच्छति ।।
मुनिवाक्य परित्यज्य दिव्यमार्गेण पूजयेत् ।
भवेत् सन्निधिमाहात्म्यं काल कल्पक्षयावधि ।।
दिव्यमार्गेण पूजाद्य वर्तते यत्र नित्यश ।
तत्र दिव्य परित्यज्य कदाचिच्च महामते ।।

[1] अनुग्रहाद्यर्थ—घ, ज

मुनिवाक्योक्तमार्गेण न कुर्यात पूजनादिकम् ।
कुर्याद्वा यदि वा मोहाद्विप्र समूढचेतन [1] ॥
घोर प्रयाति नरक राजा राष्ट्र च नश्यति ।
तस्मात् सर्वप्रयत्नेन दिव्यमार्ग च न त्यजेत्'' ॥ इति

अस्यापि प्रागुक्तन्यायेन दिव्यमार्गप्रशसापरत्वं सुव्यक्तम् । 'तत्रापि' इति अपिशब्दादिलिङ्गात् । दिव्यमार्ग तु न त्यजेत्[2]' इति निगमनेन तत्रैव तात्पर्यविश्रमाच्च ।

**दिव्यमार्गपरिग्रहवचनाना मुनिवाक्यपूजितस्वयव्यक्तस्थानविषयत्वम् ।**

यद्वा कालोत्तरोक्तन्यायेन विकल्पतश्चतुर्विधपूजायोग्य स्वयव्यक्त स्थानम् 'मुनिवाक्योक्तमार्गेण पूजन यत्र वर्तते' इत्यनूद्य तत्रापि दिव्यमार्गेण पूजनेच्छाया मुनिवाक्यपरित्यागेन दिव्यमार्गेण पूजनमविरुद्धमित्युच्यते । न ह्यत्र मुनिवाक्यस्थापितस्थाने क्वचिदपि दिव्यमार्गप्रवेश प्रस्तूयते । अपि तु मुनिवाक्यपूजित एव । सा च मुनिवाक्येन पूजा स्वयव्यक्तेऽपि यदि[3] पूर्वं वर्तेत, तत्र कुतश्चित्प्रमाणात् स्वयव्यक्तक्षेत्रत्वेऽवसिते सति मुनिवाक्यपरित्यागेनापि दिव्यशास्त्रोक्तविधिना दिव्यशास्त्राधिकारी पूजयेदित्युक्त भवति ।

[1] स वृथार्थश्चिरात्तस्य भक्तिबीजेन वै सह ।
समन्त्र कर्म तन्त्र च सिद्धयश्च पराङ्मुखा ।
इहैव शीघ्र विप्रेन्द्र देहान्ते गतसन्तति ॥
इति क, च, ज, झ पुस्तकेषु अधिक पाठ

[2] 'अस्यापि' इत्यारभ्य 'न त्यजेत्' इति यावत् घ, ड कोशयो न दृश्यते.

[3] यद्यपि—ख, ग

एतेन दिव्याद्यायतननिर्णयाध्यायोक्त प्रपञ्चोऽपि प्रत्युक्त । तथा हि—

**शास्त्रस्य दिव्यादि-नाम्ना विभाग ।**

"दिव्याद्यायतनाना च पूजाद्य यत्त्वयोदितम् ।
शास्त्रं दिव्यादिभेदेन यथावद्वक्तुमर्हसि" ॥

इति पृष्ट सनक,[1] "वासुदेवेन यत् प्रोक्तं शास्त्र भगवता स्वयम्" इत्यादिना साक्षाद्भगवत्प्रणीत ब्रह्मरुद्रेन्द्रप्रमुखैः प्रवर्तित शास्त्रं दिव्य-मित्युक्त्वा,

"ब्रह्मरुद्रमुखैर्देवै ऋषिभिश्च तपोधनै ।
स्वय प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम्" ॥

इति ब्रह्मादिभिर्निर्मितं शास्त्रं मुनिभाषितमिति[2] विभज्य, "एतत्तु त्रिविध विद्धि सात्त्विकादिविभेदत" इति मुनिभाषितस्य त्रैविध्यं प्रस्तुत्य, साक्षाद्भगवत श्रुतार्थमात्रनिबन्धनरूपं शास्त्रं सात्विकम्, भगवत श्रुतमेकदेश स्वयोगमहिमसिद्धं च शेषं[3] सङ्कलय्य ब्रह्मादि-भिस्तच्छिष्यैश्च स्वय प्रणीत शास्त्र राजसम्, केवलस्वयोग[4]विकल्पो-त्थैरर्थै कृत शास्त्रं तामसम् इति मुनिभाषितस्य त्रैविध्यमुक्त्वा, "केवल मनुजैर्यत्तु कृत तत् पौरुष भवेत्" इति दिव्यान्मुनिभा-

[1] इति सनकेन पृष्ट शाण्डिल्य —घ.

[2] ब्रह्मादिभिर्निर्मित शास्त्र मुनिभाषितमिति—क, ख, ग, झ कोशेषु न दृश्यते

[3] अशेष—क, ख, ग, ङ, च, छ, ज झ

[4] सत्त्वयोग—क, ख, ग, झ

पिताच्च [1]व्यतिरिक्तं सम्भवदप्रामाण्यमयोगिभिर्मनुजमात्रैः प्रणीतं पौरुषं वाक्यं प्रतिपाद्य, पुनर्दिव्य-सात्त्विक-राजस-तामससंज्ञितानि प्रमाण-भूतान्येव शास्त्राणि संहिताविशेषनियमेनापि विभज्य, सात्त्वत-पौष्कर-जयाख्यादीनि शास्त्राणि दिव्यानि, ईश्वर-भारद्वाज-सौमन्तव-पारमेश्वर-वैहायस-चित्रशिख-ण्डिसंहिताजयोत्तरादीनि सात्त्विकानि, सनत्कुमार-पद्मोद्भव[2]-शातातप-तेजो-द्रविण-मायावैभविकादीनि राजसानि, पञ्चप्रश्न-शुकप्रश्न-तत्त्वसागरादीनि तामसानि इति संहिताविभागनिर्देशानन्तरमुच्यते—

**संहितानां दिव्यसा-त्त्विकादिभेदेन विभाग.।**

**अपकृष्टशास्त्रस्थाने उत्कृष्टशास्त्रपरिग्रह-वचनस्य स्वयव्यक्त-क्षेत्रपरत्वम्।**

"तामसेन तु मार्गेण पूजाद्य यत्र वर्तते।
तत्रापि राजसेनैव पूजाद्य सिद्धिद भवेत्॥
राजसेन तु पूजाद्य वर्तते यत्र नित्यश।
तत्रापि सात्त्विकेनैव पूजाद्य शुभदं सदा॥
सात्त्विकेन तु पूजाद्यं वर्तते यत्र चान्वहम्[3]।
तत्र राजसमार्गेण न कुर्यात् पूजनादिकम्॥
यत्र राजसमार्गेण प्रवृत्तं त्वर्चनादिकम्।
तत्र तामसमार्गेण न कुर्यादर्चनादिकम्॥
विविधाना राजसानामन्योन्य स्यान्न सङ्कर"॥ इति।

[1] व्यक्तीभवदप्रामाण्य—ख ग

[2] पाद्मोद्भव—क, ख, च.

[3] नित्यश—क, ख, ग, च, झ

मुनिभाषितेपु त्रिपु शास्त्रेषु उत्कृष्ट-मध्यमाधमगुणसंज्ञानिर्दिष्टेषु[1] अप-कृष्टगुणसंज्ञितशास्त्रप्रवृत्तिस्थाने तत्परित्यागेनापि उत्कृष्टगुणसंज्ञितशास्त्रेण पूजाद्य सिद्धिदम । उत्कृष्टगुणसज्ञितशास्त्रप्रवृत्तिस्थाने तद्विपरीतेन शास्त्रेण पूजनादिक न कर्तव्यम् । [2]ममगुणसज्ञिताना चान्योन्य न सङ्कर कार्य इत्युक्तम् । इहापि 'यत्र' इति सामान्येन निर्दिष्टेऽपि प्रागुक्तन्यायेन प्रभूतानुभावतया सर्वमहस्वयव्यक्तक्षेत्रविशेषविषयत्व मन्तव्यम् । न तु सार्वत्रिकत्वम् ।

यद्वा चिरकालराष्ट्रक्षोभादिना विच्छिन्नपारम्पर्यप्रत्यभिज्ञानेषु स्थानेषु किंकर्तव्यतामूढान प्रति पूर्वमपकृष्टशास्त्रप्रवृत्तावपि तदज्ञानदशायामुपप्लवाभिमन्ध्यभावात सर्वाधिकारिणा मुख्यानामुत्कृष्टशास्त्रपरिग्रहौचित्यमिहोच्यते । तत्र पुन कुतश्चित् प्रमाणात् प्राक्प्रवृत्तशास्त्रपरिज्ञाने, दिव्यस्यापरित्याज्यत्व च । इद च तत्रापि' इत्यतिवादलिङ्गात् अपिशब्दात् सूच्यते । अपिशब्द-स्यातिवादलिङ्गत्व चण्डालमपि वृत्तस्थ त देवा ब्राह्मण विदु ' इत्यादि-प्रयोगेषु प्रसिद्धम् । अत एव ह्यत्रैव पुन सङ्करपरिहारे सरम्भ क्रियते ।

प्राक्प्रवृत्तापकृष्टशास्त्र-प्रत्यभिज्ञानेऽपि दिव्य-स्यापरित्याज्यत्व वा ।

' भेद दिव्यादिक सम्यग्ज्ञात्वा सर्व समाचरेत् ।
यो न ज्ञात्वा तु साङ्कर्यात् पूजाद्यमनुतिष्ठति ॥
स हि सर्वस्य जगत साङ्कर्य कुरुते सदा ।
विशेषात स्वस्य वशस्य तस्मादापद्यपि द्विज ॥
न कुर्याच्छास्त्रसाङ्कर्य हितैषी शास्त्रकोविद " ॥ इति ।

अतो यथोक्त एवार्थ ।

[1] गुण—क, ख, झ, ग कोशेषु नास्ति

[2] ननु समानगुणसज्ञिताना—ग , ननु गुणसज्ञितानामित्येन—ख, व

केचित्तु—

**उत्कृष्टशास्त्रपरिग्रहस्य अधिकारिविशेष विषयत्व वा ।**

" मुनिवाक्योक्तमार्गेण पूजन यत्र वर्तते ।
तत्रापि दिव्यमार्गाच्चेत् पूजन कर्तुमिच्छति ।
मुनिवाक्य परित्यज्य दिव्यमार्गेण पूजयेत् " ॥

इत्यादीना वचनानामधिकारिविशेषविषयतया व्यवस्थामिच्छन्ति । "व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितै " इति प्रक्रमात् ऐहिकामुष्मिकसासारिकफलविरक्तानाम् अपवर्गामन्नतमशास्त्रपरिग्रहस्य युक्तत्वाच्च । तत्तत्तन्त्रोक्तसासारिकफलसक्ताना तु यथापूर्व परिग्रह इति ।

न चात्र राजस तामससज्ञितेषु शास्त्रेष्वंशतोऽप्रामाण्यमाशङ्कनीयम् ।

**सात्त्विकादिशास्त्रत्रयमपि प्रमाणमेव ।**

" स्यान्नागर-द्राविड-वेसर[1] च क्रमेण वै सत्त्व-रजस्तमासि ।
महीसुरोर्वीपति-वैश्यकास्ते हरिर्विधाता हर आदिदेव " ॥

इति विमानक्रियादिविषयोत्तम-मध्यमत्वादिविवक्षया सत्त्वादिगुणोक्तिवत् इहापि तद्विवक्षया[2] तद्गुणोक्ते । प्रमाणभूतशास्त्रविषयेष्वेव सात्त्विकराजस तामसविभागस्य "यजन्ते सात्त्विका देवान् यक्ष-रक्षासि राजसा " इत्यादिभिर्भगवद्गीतायामपि प्रतिपादितत्वात् । अप्रामाणभूतस्य[3]

[1] द्रावलवैशस—ग

[2] सत्त्वादिगुणोक्तिवत् इहापि तद्विवक्षया—क, ख, ग, ङ, च, छ, ज, झ कोशेषु नास्ति

[3] अप्रामाण्यस्य—क, ख, ग छ, ज, झ

पौरुषस्य तु वाक्यस्य "केवल मनुजैर्यत्तु कृत तत पौरुष भवेत्" इति पृथङ्निर्देशात् ।

"सर्वत्र पौरुषे वाक्ये तद्ग्राह्यमविरोधि यत् ।
केवल तद्विधानेन न कुर्यात् स्थापनादिकम्" ॥

इति हि पौरुषसंज्ञिने वाक्ये [1]विरुद्धाविरुद्धाशसद्भावोऽत्र दर्शित । अत सात्त्विक-राजस-तामससज्ञानिवेशोऽत्र सत्त्व-रजस्तम प्रचुरतत्तत्फलसिद्धि-विशेषतारतम्याभिप्रायेणेति मन्तव्यम् ।

कृत्स्न पञ्चरात्र प्रमाणम् ।

कात्स्न्येंन हि भगवच्छास्त्रस्य प्रामाण्य प्रागेव प्रतिपादितम् । न चात्र भगवद्व्यतिरिक्तब्रह्मादिपुरुषकृताशेषु कारणदोष सभवति । 'पञ्च-रात्रस्य कृत्स्नस्य वक्ता नारायण स्वयम्' इति स्ववक्तृके शास्त्रे भगवतैव तेषामृषीणा तत्तत्पुण्यविशेषानुसारेण नित्येऽपि वेदे सूत्रकाण्डमन्त्रकृत्त्ववत् संहिताकर्तृत्वस्याधिकारतया समर्पितत्वात् । यथा च व्यासोक्ते महाभारते वैशम्पायन-सहिताभेद [2] एवमत्रापीति न सङ्कट किंचित् । अत कृत्स्न पञ्चरात्र प्रमाणम् । तस्यावान्तरसहिताभेद ऋगादिवच्चतुर्धावस्थित । तद्वदेव

असाङ्कर्येण सिद्धान्तानाम् अनुवर्तने फलम् ।

यथाधिकार व्यवस्थितानुष्ठानतया सिद्धान्तादिसङ्कर-परिहारेणैव सर्वदानुवर्तनीयम् । तथानुवर्तन[3] यथाधिकार साक्षात् परम्परया वा सद्ब्रह्मवासुदेवाख्य-परमपुरुषार्थप्राप्ति[4]साधनमिति सिद्धम् ॥

[1] विरुद्धाशसद्भावः—क, ख, ग, च, झ
[2] सहितादिभेद —घ, ङ, छ, ज
[3] तथानुवर्तमानाना—ग, घ, ङ, छ, ज , तथानुवर्तने—क, झ
[4] प्राप्तिसूचन—क, झ

पञ्चकालव्यवस्थित्यै वेङ्कटेशविपश्चिता ।
श्रीपञ्चरात्रसिद्धान्तव्यवस्थेयं समर्थिता ॥

अहितविहतिदीक्षै[1]र्बाहुभिर्व्यूहभेदैः
निगमनिजमतैश्च[2] व्यक्तभूमा चतुर्भिः ।
प्रथमयुगसमग्रं धर्ममभ्यस्यमानान्
प्रशमितकलुषान्[3] नः पातु वैकुण्ठनाथः ॥

---

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीपाञ्चरात्ररक्षायां

**सिद्धान्तव्यवस्थापनाख्यः**[4]

**प्रथमोऽधिकारः ।**

---

[1] दक्षै —क, ग, ङ, च, छ, झ
निजनिगमशतैश्च—क, ग , निजनिगममतेश्च—ञ, झ
[3] कलुषो व —घ, ङ, छ, ज
[4] व्यवस्थाख्यः—घ, ङ, ज , व्यवस्थानाख्य —छ

|| श्रीः ||

# नित्यानुष्ठानस्थापनाख्यः

## द्वितीयोऽधिकारः ।

अथादौ समुपक्षिप्तमच्छिद्रं स्थाप्यतेऽधुना ।
स्वयंप्रयोजनं नित्यं स्वामिसेवनमञ्जसा ॥
ससामान्यविशेषात्मा चर्येयं हृदयङ्गमा ।
ससूत्रसुमनस्स्तोमा मालेवामोदिनी विभोः ॥

**अभिगमनादिना भगवत्सेवनं सर्वेषां समानम् ।**

इह तावदेकैकस्मिन्नहोरात्रे[1] कालपञ्चकविभागेन अभिगमनोपादानेज्या-स्वाध्याय-योगरूपभगवत्सेवनं स्ववर्णाश्रम-जाति-गुण-निमित्तादि-[2] नियतधर्मसचिवं भगवद्धर्मनिष्ठानां सर्वेषां समानम् । तच्च संहिताभेदेषु चोदनाख्याविशेषेऽपि सूत्रभेदेषु समानचोदनाख्यचत्वारिंशत्संस्कारादिवल्लेशतो भिन्नरूपं प्रतिपाद्यते । तत्र रहस्याम्नायविदामेवायं धर्म[3] इति अविदितसात्त्वतधर्माणामाकस्मिको भ्रमः । ते तु स्वशाखोक्तप्रकारेण पाञ्चकालिकधर्ममनुतिष्ठन्ति । इतरे च यथास्वं तत्तत्संहितोक्तप्रक्रिययेति व्यवस्था । वर्गद्वयेऽप्यधिकारिविशेषमात्रेणैव हि भेदोऽनुशिष्यते । यथोक्तं पाद्मे ।

[1] एकस्मिन्—क, ख, च, झ.
[2] जातिनिमित्तादि—क, ख, ग, झ.
[3] अयं निजधर्मः—ज.

"ब्रह्मोवाच—

'कर्षणादि प्रतिष्ठान्त कर्म यस्य प्रसिद्धये ।
त समाराधनविधि श्रोतुमिच्छामि सम्प्रति ॥
आराधनविधि कीदृगधिकारी च कीदृश ।
भगवस्तदशेषेण ब्रूहि मे भक्तवत्सल!' ॥

**एकायनिना मुख्य-मधिकारित्वम्**
**अन्येषा तु दीक्षया ।**

श्रीभगवानुवाच—

श्रूयतामभिधास्यामि पृष्ट निरवशेषत ।
आद्यमेकायन वेदं[1] सद्ब्रह्मप्रतिपादकम् ॥
तेनैव सस्कृता विप्रा मुख्यकल्पाधिकारिण ।
अन्येषा ब्राह्मणादीना वर्णाना दीक्षया क्रमात ॥
अधिकारोऽनुलोमानामपि नान्यस्य कस्यचित् ।
पूजाविधौ भगवतस्तेऽनुकल्पाधिकारिण ॥
प्रतिलोमभुवा सूत प्रथमस्तत्र[2] शस्यते ।
त्रयाणा क्षत्रियादीनामनुलोमभुवामपि ॥
सूतस्य च विशेषेण दीक्षात्मार्थपरानिशम्[3] ।
परार्थयजन कुर्युर्विप्रा मुख्यानुकल्पयो ॥
नैवाधिकारिणो गौणा दीक्षासस्कारवर्जिता ।
यथैव दीक्षणीयेष्ट्या जायन्ते ब्राह्मणादय ॥

[1] वेद इत्येव सर्वत्र पाठ ।
[2] प्रथम तत्र—क, झ
[3] दीक्षामात्थ परानिशम्—क, ख, ङ, च, झ , दीक्षामार्थ परानिशम्—ज

तथैव दीक्षाविधिना जायमाना यथोदिता ।
पूजाविधौ भगवतः प्रकल्पन्तेऽधिकारिणः ॥" इत्यादि ।

एवं संहितान्तरेष्वपि ग्राह्यम् ।

**जयाख्यसंहितायां पञ्च कालाः पाञ्चकालिककर्माणि च ।**

तदिह वक्तृसिद्धान्तोक्तवर्त्मना चतुर्विधपञ्चरात्रिणां[1] साधारणमभिगमनादिपञ्चकम् । मन्त्रसिद्धान्तादिष्वपि हि कालपञ्चकविभागोऽयमुपदिश्यते । यथोक्तं साक्षाद्भगवन्मुखोद्गततया रत्नत्रयमिति प्रसिद्धेषु जयाख्य सात्त्वत-पौष्करेषु जयाख्यसंहितायाम्—

'नारदः—

"एको हि श्रूयते देवकालो लोके न चापरः ।
पञ्च कालास्त्वयोद्दिष्टाः किमेतन्मेऽत्र संशयः ॥

श्रीभगवानुवाच—

एकस्यैव हि कालस्य वासरीयस्य नारद ।
आप्रभातान्निशान्तं वै पञ्चधा परिकल्पना ।
पृथक्कर्मवशात् कार्या न कालाः बहवः स्मृताः ॥

नारदः—

एककालाश्रितानां[2] च कर्मणां लक्षणं वद ।
परिज्ञातैस्तु यैः सद्यः कृतकृत्यो भवाम्यहम् ॥

श्रीभगवानुवाच—

ब्राह्मान्मुहूर्तादारभ्य प्रागंशः विप्र वासरे ।
जप-ध्यानार्चन-स्तोत्रैः कर्म-वाक्-चित्तसंयुतैः ॥

[1] पञ्चरात्राणां—क, ख, ग, च, झ
[2] एककालस्थितानां—जयाख्यसंहिता

अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ।
ततः पुष्प-फलादीनामुत्थायार्जनमाचरेत् ॥
भगवद्यागनिष्पत्तिकारणं प्रहर[1] परम् ।
तदुपादानसंज्ञं वै कर्म कालपदाश्रितम् ॥
ततोऽष्टाङ्गेन यागेन पूजयेत् परमेश्वरम् ।
साधिकं प्रहरं विप्र इज्याकालस्तु स स्मृतः ॥
श्रवणं चिन्तनं व्याख्या ततः[2] पाठसमन्विता ।
स्वाध्यायसंज्ञं तद्विद्धि कालांशं मुनिसत्तम ॥
दिनावसाने सम्प्राप्ते पूजां कृत्वा समभ्यसेत् ।
योगं निशावसाने च विश्रमैरन्तरीकृतम् ।
पञ्चमो योगसंज्ञोऽसौ कालांशो ब्रह्मसिद्धिदः ॥

नारदः —

श्रुतो मयाखिलः पूर्वं भगवद्याग उत्तमः[3] ।
तस्याङ्गानि विभागेन ज्ञातुमिच्छाम्यहं पुनः ॥

**यागस्य अष्टावङ्गानि ।**

श्रीभगवानुवाच —

अन्तःकरणयागादि यावदात्मनिवेदनम् ।
तदाद्यमङ्गं यागस्य नाम्नाभिगमनं महत्[4] ॥

[1] प्रहर —क, ख, ग, च, ज, झ
[2] तप —क, ख, ग, च, झ
[3] उत्तर.—क, ख, ग, ङ, च, छ, झ
[4] तच्चाभिगमनं भवेत्—क, ख, ग, च, झ

पूजन चार्घ्यपुष्पाद्यैर्भोगैर्यदखिल मुने ।
बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद ॥
मध्वाज्याक्तेन दध्ना वै पूजा च पशुनापि वा[1] ।
तत्तृतीय हि यागाङ्गं तुर्यमन्त्रेन पूजनम् ॥
निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने ।
सम्प्रदानं तु तन्नाम यागाङ्गं पञ्चमं स्मृतम् ॥
वह्निसन्तर्पणं षष्ठ पितृयागस्तु[2] सप्तमम् ।
प्राणाग्निहवनं नाम्ना त्वनुयागस्तु[3]दष्टमम् ॥
इत्येतत् कथितं सर्व यत्त्वया परिचोदितम् ।
प्रददाम्यचिराद्यद्वै तन्निष्ठाना परं पदम् ॥" इति ।

अचिरादित्यनेनास्य कर्मण कर्मान्तरेभ्य स्वभावत प्राशस्त्यमुच्यते। स्मरन्ति च व्यासादय —

"न विष्ण्वाराधनात् पुण्य विद्यते कर्म वैदिकम् ।
सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधि ॥"

इत्यादि[4] । प्रयाससाम्य-वैषम्यानादरेण स्वरूपत प्राशस्त्य द्रव्यादिष्वपि विद्यते । यथोक्तमाश्वमेधिके श्रीवैष्णवधर्मशास्त्रे—

'सर्वेषामेव पुष्पाणा सहस्रगुणमुत्पलम् ।
तस्मात् पद्म तथा राजन् पद्मात्तु शतपत्रकम् ॥

[1] पशुना सह—क, ख, ग, झ.
[2] पितृयाग तु—क, ख, ग, ङ, च, छ, झ
[3] अनुयाग—क, ख, ग, ङ, च, छ, ज, झ
[4] इति—क, च, झ

तस्मात् सहस्रपत्रं तु पुण्डरीकमतः परम् ।
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ॥
बकपुष्पं ततस्तु स्यात् सौवर्णं तु ततोऽधिकम् ।
सौवर्णाच्च प्रसूनात्तु मत्प्रियं नास्ति पाण्डव" ॥ इति ।

एवं जप-होम-दानादिष्वपि प्रसिद्धम् । पाद्मेऽप्येवं प्रशस्ततमं[1] पञ्चकालमेवमुक्तम् ।

पञ्चकालविधौ पाद्मवचनानि ।

"ब्रह्मोवाच--

"पञ्चकालविधिज्ञानां प्राशस्त्यं भगवन्निह ।
कथितं पञ्च के कालाः विधयश्चापि पञ्च के ॥
मह्यं जिज्ञासमानाय कथयस्व यथातथम् ।
न चेद्रहस्यमत्यन्तं यदहं पृष्टवानिदम् ॥

श्रीभगवानुवाच—

आद्यं कर्माभिगमनमुपादानं ततः परम् ।
इज्या च पश्चात् स्वाध्यायस्ततो योगस्ततः परम् ॥
पञ्चैते विधयस्तेषां कालाः पञ्चैव ते क्रमात् ।
कल्याणाचरणान्तं यत् कर्मजातं चतुर्मुख ॥
उत्थानादिक्रमादेतदभियानं[2]मुदीरितम् ।
ब्राह्मे मुहूर्ते बुद्ध्येत ध्यायन्नारायणं परम् ॥
उत्थायासीत शयने कीर्तयन्नाम वैष्णवम्" ।

[1] प्रसिद्धतम—क, ख, ग, झ
[2] अभिधान—क, ख, घ, ङ, च, झ

इत्यादिरध्याय कृत्स्नोऽपि पाठ्य । एव सहितान्तरेष्वपि तत्र तत्र संग्रहेण विस्तरेण च[1] पञ्चकालविधिर्द्रष्टव्य । कि च--

"नमस्ते पञ्चकालज्ञ पञ्चकालपरायण ।
पञ्चकालैकमनसा त्वमेव गतिरव्यया" ॥

इत्यादिषु पाञ्चकालिकधर्मस्य भगवदेकवेद्यत्वं भगवत्प्रियतरत्व तन्निष्ठानामव्यवधानेन[2] भगवत्प्राप्तिश्च प्रतिपाद्यते ।

यत्तूक्तं भोजराजेन प्रयोगपद्धतिरत्नावल्याम्---"तत्र सङ्गवादय काला अहरह प्रवर्तन्ते । सङ्गव समो विष्णुप्रियो धर्मो विराग इति पञ्च काला अध्यात्मविद्भिरुपदिष्टा । उदयात् पञ्च नाड्य **सङ्गव** उक्त । तस्माद्द्विगुणमात्रा **सम** उपदिश्यते । तावता **विष्णुप्रिय** " इत्यादि । तत्र पुष्पविशेषाराध्यविशेषनिर्णयार्थोऽय कालविभाग । न त्वभिगमनादिपञ्चककर्तव्यार्थ । तथा हि पूर्वमुक्तम—"सङ्गवे तत्तिथिचोदित पुष्प गृह्णीयात् । समे पद्मै धर्मे कुमुदै. करवीरैर्विष्णुप्रिये. बिल्वपत्रैर्विरागे भगवन्त पूजयेत्" इति । उत्तरत्र चैव तत्तत्कालाराध्यभगवन्मूर्तिविशेषप्रदर्शन कृतम्[3] । 'तत्र सङ्गवे वैकुण्ठस्य प्रीति. समेऽनिरुद्धस्य, विष्णुप्रिये शिशुमारस्य, धर्मे बडबामुखाग्ने विरागे कपिलस्य, इत्येव पञ्चाना पञ्च प्रीतिकालविशेषा" इति । अतो जयाख्यसंहितोक्तप्रकारेणैवाभिगमनादिपञ्चकव्यवस्था नित्या अन्यत् काम्यादिकम ॥

भोजोक्ता सङ्गवादय पञ्चकाला अन्यार्था ।

[1] चकार क, ख, ग, च, छ, ज, झ कोशेषु नास्ति

[2] अप्यव्यवधानेन—क, ख, ग, च, झ

[3] "सङ्गवे तत्तिथि" इत्यारभ्य "प्रदर्शन कृत" इति यावत् क, ख, ग, झ पुस्तकेषु विमुक्तम्

एवं दिनचर्यामर्यादाया स्थिताया केषाचित् त्रैकाल्यार्चनादिविधानानि विषुवायनोपराग-जन्मत्रय द्वादशी-पर्व-श्रवणादिवैशेषिकार्चनान्यपि यथाबल तदन्त पातेन नेतव्यानि । अशक्तमधिकृत्यैव ममाहृत्यानुष्ठान क्वचिद्विधीयते । मच्छिद्रपञ्चकालता च तावन्मात्रयोग्यस्यैव । अन्यार्थकर्मान्तरितत्वं सच्छिद्रत्वम् ।

पाञ्चकालिकधर्मे सच्छिद्राच्छिद्रविभाग ।

"द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञः स तु भागवत स्मृत" ॥

इति तु पूर्णस्य मुख्याधिकारिण स्तुति । न तु तस्यैव पाञ्चकालिकभागवतत्वप्रतिपादनपरम् ।

"चतुर्व्यूहविभागज्ञ पञ्चकालपरायण ।
द्वादशाक्षरनिष्ठो य स वै भागवतोत्तम" ॥

इति शाण्डिल्यवचनमपि तथैव ।

एवं द्वादशाक्षरोपादानमपि व्यापकान्तरोपलक्षणम् । स्वसंहितोक्तमन्त्रनिष्ठामात्रेण[1] यथार्ह सर्वेषा पञ्चकालधर्मप्राप्ते । अत एव हि भाष्यकाराणा शिष्या प्रशिष्याश्च श्रीमदष्टाक्षरेण समाराधन प्रपञ्चयन्त पञ्चकालकल्पनयैव दिनचर्यामुपदिदिशु । तथा हि—भाष्यकाराव्यवहितशिष्यैर्वङ्गिवंशेश्वरै श्रीरङ्गनारायणाचार्यैर्ब्राह्ममुहूर्तप्रभृति दिनचर्या प्रपञ्चयद्भिर्हरिसंकीर्तन-संसारनिर्वेद मात्त्विकधृत्यालम्बनसमनन्तरकालहिता[2]ध्यवसायपर्यन्तमुक्त्वा अनन्तरमुच्यते—

पाञ्चकालिकधर्म श्रीभाष्यकारादीना अभिमत ।

[1] स्वसहितोक्त निठामन्त्रेण—क, ट, छ, ज, झ, स्वसहितोक्त निष्ठामात्रेण—ख, ग, च
[2] कालविहित—क, ख, ग, ड, च, छ, ज, झ.

"इत ऊर्ध्वमहं तावद्यावज्जीव श्रिय श्रिय ।
पदयोरर्चन कर्तु यतमान समाहित ॥
अभिगच्छन् हरि प्रात पश्चाद्द्रव्याणि चार्जयन् ।
अर्चयश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥
ध्यायन्नपि परं देव कालेषूक्तेषु पञ्चसु ।
वर्तमान सदा चैव पाञ्चकालिकवर्त्मना ॥
स्वार्जितैर्गन्धपुष्पाद्यै शुभै शक्त्यनुरूपत ।
आराधयन हरि भक्त्या गमयिष्यामि वासरान् ॥" इति ।

श्रीपराशरभट्टारकैश्च—

"गर्भजन्मजराद्दु खमिश्रससारसागरात् ।
उत्तीर्य भगवत्प्राप्ति लिप्सेत पुरुषो यदि ॥
प्रातरुत्थाय संस्मृत्य हरि तच्चरणोत्थिताम् ।
गङ्गा विभाव्य तीर्थाम्भस्ततस्तदवगाह्य च ॥
श्रुतिस्मृत्युदितं कर्म यावच्छक्ति परात्मन ।
आराधनत्वेनापाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत् ॥
मन्त्रैराधारशक्त्यादिपारिषद्यान्तसस्थितै ।"

इति पूर्वाचार्योक्त सग्रहेण प्रदर्श्य, "हरि प्रणम्य चायम्य प्राणान प्रणिपतन् गुरून्" इत्यारभ्य, श्रीमदष्टाक्षरमन्त्रस्य ऋषि छन्दो देवता-बीजशक्ती प्रकाश्य, भाष्यकारानुक्तो मन्त्रन्यासस्तच्छिष्याद्युक्तप्रकारेणोपादेय इति ज्ञापनाय "मन्त्रन्यास तत कृत्वा मन्त्रार्थमपि चिन्तयेत्" इति सग्रहेणाभिधाय, पूर्वैर्ग्रन्थेष्वनिवेशित मन्त्रार्थचिन्तन अत्यन्तोपयुक्ततया[1]

[1] मन्त्रार्थ अत्यन्तोपयुक्ततया—घ, ज

स्वयमेवाभिधाय,[1] "एवं सञ्चिन्त्य मन्त्रार्थं ततस्तत्पुरुषं [2]परम्" इत्यादिना पूर्वैरुक्तं ध्यानं संक्षिप्य, तदनुक्तं पादादिकेशान्तध्यानं प्रपञ्चय्य षोडशोपचारक्रमेण समाराधनं च विहितम्। उपचारान्तराणामपि सर्वेषामेते षोडश प्रधानतमाः। तदनुबन्धेनैवान्यत्सर्वमनुष्ठीयते। देश-कालावस्थाद्यनुसारेण संक्षेप-विस्तारस्वीकारश्च शास्त्रीयः। अतः पूर्वैरैककण्ठ्यमिहाप्यनुसन्धेयम्। अत एव हि तदुभयानुसारिभिर्नारायणमुनिभिरपि पञ्चकालकल्पनया तत्तत्कालानुष्ठेयानि यथाक्रमं प्रपञ्चितानि।

तथा हि—

"भगवच्चरणाम्भोजपरिचर्याविधिक्रमम्।
एकान्तिभिरनुष्ठेयं नित्यं समभिदध्महे॥
ब्राह्मे मुहूर्ते सत्त्वस्थो हरिर्हरिरिति ब्रुवन्।
उत्थाय तत्र शयने समासीनः समाहितः"॥

इत्यारभ्य

"द्वयेन तद्विवरणैः प्रपद्य प्रभुमीश्वरम्।
निक्षिप्य चिरमात्मानं तत्पादाब्जे कृती भवेत्॥
यो नारायणदासीयो माधवाराधनक्रमः।
तत्राभिगमनं नाम प्रथमः पटलो ह्ययम्"॥

इत्यन्तेनाभिगमनं परिसमाप्य

"अह्नो द्वितीयभागेन कृष्णाराधनतत्परः।
द्रव्याण्याराधनार्थानि शास्त्रीयाणि समार्जयेत्"॥

[1] पूर्वैः इत्यारभ्य स्वयमेवाभिधाय इत्यन्तं क, ख, ग, ञ पुस्तकेषु विमुक्तम्

[2] तं पुरुषं—क, ञ, परमिति पदं क, ख, ग, घ, ञ कोशेषु नास्ति

इत्यादिभि पटलै तत्तत्कालाशसाधनीयमुपादानादिकमपि यथाक्रम प्रपञ्चितम । तदेव चतुर्विधपञ्चरात्रनिष्ठाना तत्रापि यत्किंचिद्व्यापकमन्त्रप्रधानाना सर्वेषामपि भगवदेकान्तिना यथायथ प्राचीनपरिगृहीतवैकल्पिकमर्यादाभेदै पाञ्चकालिकधर्म प्राप्त ॥

तत्र ये स्वाधिकारानुरूप प्रपत्तिमेव केवलामव्यवहितामपवर्गसाधनमवलम्बन्ते तैरय पञ्चकालक्रम परित्याज्य परिग्राह्यो वेति विचार्यते ।

प्रपन्ने पञ्चकालक्रम त्याज्य इति पूर्वपक्ष ।

प्रपत्तिप्रकरणेषु तदङ्गत्वेन तदुपदेशाभावाद्विलम्बाक्षमस्याधिकारिण शातवार्षिकव्रतपूरणावधिकालक्षेपाक्षमत्वात् तदेकदेशभूतयोगशक्तौ च तस्यैवोपायत्वस्वीकारप्रसङ्गे यथाशक्ति वर्णाश्रमधर्मानुष्ठानरूपस्य[1] भगवत्प्रीणनस्य तदाज्ञानुपालनस्य कर्तव्यत्वेऽपि व्यास-दक्षादिधर्मशास्त्रोपदिष्टकालविभागपूर्वकदिनचर्यामर्यादयापि[2] सिद्धे अन्यथा कर्मणा परस्परोपरोधप्रसङ्गाच्च परित्याज्य इति पूर्व पक्ष ॥

राद्धान्तस्तु परिग्राह्य एवायमिति । तिष्ठतु तावदिह प्रमाणोपपत्तिपरामर्श । भाष्यकाराद्युपदेशसम्प्रदायस्तावत परामृश्यताम् । "अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये" इत्यारभ्य, शौनक-

प्रपन्ने पञ्चकालक्रमो ग्राह्य इति सिद्धान्त ।

व्यास-बोधायनादिधर्मशास्त्रानुक्तेन भगवच्छास्त्रोक्तेन वर्त्मना स्नानविशेषादिपूर्वकविलक्षणसमाराधनप्रक्रियाप्रतिपादन कथंभूतमधिकारिणमधिकृत्य भाष्यकारै कृतमिति कर्णे तवागतम्? भवतु तच्छक्तमधिकार्यन्तर प्रतीति चेन्न । प्रपत्त्येकनिष्ठै तच्छिष्यप्रशिष्यादिभि[3] योग्यैरद्ययावद्यथाशक्ति तदनुष्ठानदर्शनात् । साधनबुध्या

[1] वर्णाश्रमानुष्ठानरूपस्य—क, ख, ग, च, झ

[2] दिनचर्याद्वारापि—क, ख, ग, झ.

[3] प्रशिष्यादिभिश्च—क, ख, ग, च, झ

च तदनुष्ठानाभावस्य "भगवत्कैङ्कर्यैकरति परमैकान्ती भूत्वा" इत्यादिभिस्तत्रैवोपदेशात् । अनन्योपायेऽनन्यप्रयोजने चाधिकारिणि परमैकान्तिशब्दस्य साम्राज्यात् । "अथ परमैकान्तिनो भगवदाराधनप्रयोग वक्ष्ये" इत्यस्य पूर्ववृत्तापेक्षाया "तमेव शरणमुपगच्छेदखिलेत्यादिना", "शरणागतिप्रकारश्च पूर्वोक्त" इति तत्प्रबन्धस्थवाक्यद्वयेन परिपूर्णशरणागतिविषयस्य गद्यग्रन्थस्य पूर्ववृत्तत्वप्रतीते । एतच्च समर्थयिष्यते । अतस्तथाविधप्रपन्न एवात्र परमैकान्ती । तमधिकृत्यैव किंचित्सिद्धान्तस्था काचित्संहिता प्रधानीकृत्य समाराधनप्रयोगोऽत्र सगृह्यत इति यथासम्प्रदायमकामेनापि स्वीकरणीयम् ।

तच्च समाराधनमर्घ्यादिपात्रप्रक्षेप[1]पर्यंतत्तदासनभोगानुपूर्वी समर्पणीयौपचारिक-साम्पर्शिकाभ्यवहारिकादिभेदभिन्नगन्ध-पुष्पादिपरश्शतद्रव्यसापेक्ष दृश्यते । तदपि न्यायत स्वयमेवार्जित मुख्यम् । अशक्तस्य तु पुत्रशिष्यादिमुखेन तत्प्रेरणरूपार्जनव्यापार । पूर्वसिद्धद्रव्यस्यापि तत्काले तदर्थोपादानमिति समाराधनात् पूर्वमेव नान्तरीयक सम्यग्द्रव्योपादानम् । अत इज्योपदेशेनैवार्थात्तदपेक्षितोपादानमपि स्वकालप्राप्तमुपदिष्ट भवति । ततोऽपि पूर्वमभिगमनमपि तद्विधायकतत्तच्छास्त्रतत्तन्मन्त्रविशेषादिपरामर्शादन्तत प्रपत्तिरूपतयैव परिणतमिति प्रागेव तदुपदेशेनार्थादभिगमनमप्युपदिष्ट भवति । अत एव हि तदभिप्रायविद्भिर्नारायणमुनिभि —

पञ्चकालप्रक्रिया श्रीभाष्यकाराभिमतेति समर्थनम् ।

"द्वयेन तद्विवरणै प्रपद्य प्रभुमीश्वरम् ।
निक्षिप्य चिरमात्मान तत्पादाब्जे कृती भवेत्" ॥

[1] प्रक्षेप—क, ख, ग, घ, च, झ
अर्थादपेक्षित—क, ख, ग, च, झ

इत्यभिगमन निगमितम्[1] । तद्विवरण च गद्यादिकमेव । अनुयागपर्यन्तसमाराधनसमनन्तरभाविस्वाध्यायश्च श्रुति-स्मृतीतिहास-पुराण-मन्त्रजप-सत्संवादाध्यात्मशास्त्रश्रवण-प्रवचनाद्यात्मा यथासम्भवं भगवच्छास्त्र-धर्मशास्त्रादिष्वनन्तरभावियोगोपकारकज्ञानसन्धुक्षणप्रयोजन प्रतिपाद्यत इति तत्कालनित्य सोऽपि 'द्वयमर्थानुसन्धानेन सह सदैवं वक्ता' इति गद्योक्तस्य द्वयवचनस्य शास्त्रीयकर्मान्तरानुपरोधेन यथावसरमुपनिपातादुपदिष्ट एवेति ज्ञायते । सदावचनं हि न निद्राकाले अशक्यत्वात् । न मौनकाले तद्विधिविरोधात्[2] । न मन्त्रान्तरादिसाध्यसमाराधनादिकाले तैरव[3] तदुपरोधात् । अतो यथावसरे तत्प्राप्ति । एव योगोऽपि[4] द्वयार्थानुसन्धानैकाग्र्यरूपः सर्वव्यापारोपरतिसुभगनिद्रापूर्वापरकालयोः "तत्पूर्वापररात्रेषु युञ्जान" इत्याद्युक्तावसरलब्धयत्नलभ्य[5] । श्रीवैकुण्ठगद्ये च स्वतन्त्रप्रपत्तिनिष्ठामेव विधाय "ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत्" इत्यारभ्य, परमपदपर्यङ्कनिलयस्य भगवत परिपूर्णध्यानयोगमुक्त्वा, अनुसन्धानविशेषाश्चोपदिश्य, "श्रीमत्पादारविन्दं[6] शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नमर्वावयव सुखमासीत" इत्यनेनानन्यप्रयोजनो विचित्रो योग प्रतिदिनकर्तव्यत्वेन विहित । तदधिकारे च विस्तरेण दर्शयिष्याम । नित्ये च "एवं शरणमुपगम्य तत्प्रसादोपबृंहितमनोवृत्तिस्तमेव भग-

[1] निर्णीतम्—ङ, छ, निर्दिष्टम्—ज.

[2] तद्विरोधात्—क, ख, ग, झ

[3] तेनैव—क, ख, ग, च

[4] अपि—क, ख, ग, ङ, च पुस्तकेषु न दृश्यते.

[5] अवसरयुक्तयत्नलभ्य —क, झ, अवसरयत्नलभ्य —घ, अवसरलब्ध्या युक्तयत्नलभ्य —च, छ

[6] पादारविन्दयुगल—क, च, झ.

वन्तं सर्वेश्वरेश्वरमात्मन स्वामित्वेनानुसन्धाय,[1] अत्यर्थप्रियाविरतविशदतम-प्रत्यक्षतापन्नानुध्यानेन[2] ध्यायन्नासीत" इति समाराधनारम्भोक्तस्यानु-ध्यानस्य स्वादुतमस्य समाराधनवदेव अनन्यप्रयोजनकैङ्कर्यरूपतयावसरे प्राप्तिर्युक्ता, तस्मादनन्यप्रयोजनप्रधानतया परिपूर्णसमाराधनविशेषोप-देशिभिर्भाष्यकारैरर्थत शास्त्रान्तरैश्च सिद्धमन्यदपि सर्वमनुज्ञातमिति विज्ञायने। अत एव हि तच्छिष्य-प्रशिष्यादय पञ्चकालविभागेनैव भगवत्सेवा प्रत्यपीपदन्। प्रपत्त्यावृत्तिप्रसङ्गादिचोद्यानि तु निक्षेपरक्षान्ते[3] परिहृतानि।

अत्र यदुक्त प्रपत्त्यङ्गत्वेनोपदेशाभावात् परित्याज्य इति तदसत। भाष्यकारोक्तनित्यसमाराधनस्यापि तत एव परित्याज्यत्वप्रसङ्गात्। तच्चे-द्भगवत्प्रीत्येकप्रयोजनतयानुष्ठेयमित्यनुज्ञायेत तर्हि तदनुबन्धि सर्वमपि तद्वदनुज्ञायताम्। प्रपत्त्यङ्गसर्वधर्मस्वरूपत्यागविधिवादिनोऽपि हि[4] स्वामिनि भगवति दासभूतस्य प्रपन्नस्य स्वरूपप्राप्ता किङ्करवृत्तिमनुजानन्ति। यत्तु शातवार्षिकव्रतावधि विलम्बाक्षमत्वमुक्तं तत्तथैव। न ह्यस्य निष्पन्नो-पायस्य शातवार्षिकव्रतमनुष्ठेयं ब्रूम। यथा हि नदीतरणाय नौकागमनं प्रतीक्षमाणाः पुरुषा केचिल्लीलाद्यूतेन कालं यापयन्ति। केचित् पणबन्धद्यूतेन। द्यूतमर्यादानुपालनं चोभयेषा समानम्। तत्रानियतकाल-भाविनौकागमनसमये वैहारिका विहारद्यूतविच्छेदेनापि नदीं तरन्ति। बद्धपणास्तु यावद्द्यूतसमाप्ति विलम्बन्ते। तद्वदिहापीति तत्त्वविदा सम्प्रदाय।

[1] स्वामित्वेन सुहृत्त्वेन—क, ख, ग, च, झ

[2] अनुसन्धानेन—घ, ङ, छ, ज

[3] निक्षेपरक्षाया—क, ख, ग, च, ज, झ.

[4] हि—क, ख, ग, च, झ पुस्तकेषु नास्ति।

यच्चान्यदुक्तं योगशक्तौ तस्यैवोपायत्वस्वीकारः प्राप्नोतीति तदपि मन्दम्। स्वयोगमहिमप्रत्यक्षिततत्त्वत्रयाणां नाथमुनि-कुरुकेश्वरप्रभृतीनां प्राक्-

**तात्कालिकयोगशक्तौ प्रपत्तिनिष्ठाविरोधपरिहारः।**

परिगृहीतप्रपत्त्युपायैकनिष्ठानामेव पश्चादपि भगवत्प्रसादलब्धयौगिकभगवदानन्दास्वादस्य प्रसिद्धत्वात्, अन्यथा तथाविधानुसन्धानपूर्वकभाष्यकारोक्तसमाराधनादिशक्तौ तस्याप्युपायत्वस्वीकार[1]प्रसङ्गात्। तच्चेत् स्वामिकैङ्कर्यरूपमिति स्वादुतमतया[2] स्वयंप्रयोजनत्वेनोपादीयेत समाधावप्ययं समाधिकदरिद्रसुखसन्दोहात्मनि समः समाधिः। प्रपन्नानुगुणं च यौगिकमनुसन्धानं शाण्डिल्य[3]स्मृतावुच्यते—

"ईदृशः परमात्मायं प्रत्यगात्मा तथेदृशः[4]।
तत्संबन्धानुसन्धानमिति योगः प्रकीर्तितः॥
योगो नामेन्द्रियैर्वश्यैर्बुद्धेर्ब्रह्मणि संस्थितिः।
प्रयुक्तैरप्रयुक्तैर्वा भगवत्कर्मविस्तरे॥" इति।

एतदनुबद्धमेव[5] द्वयार्थानुसन्धानम्। एतद्विरुद्धं तु राहुमीमांसकानां कबन्धमीमांसकानां चानुसंधानं वेदबाह्यमिति श्रीकृष्णमुनिभिरुक्तम्—

"चेतनस्त्वेक एवेति मतिर्या केवला क्रिया।
फलतीति मतिस्ते द्वे वेदाप्रामाण्यबुद्धिजे।
'स एनं प्रीतः प्रीणाति' ब्राह्मणस्यानुगे न ते॥" इति।

[1] स्वीकार—क, ख, ग, च, झ पुस्तकेषु नास्ति।
[2] स्वादुतमतया—क, ख, ग, च, झ पुस्तकेषु नास्ति।
[3] शाण्डिल्यस्मृतावपि—क, च, झ
[4] अयमीदृशः—घ, ङ, छ, ज
[5] एतदनुसन्धानमेव—क, ख, ग, ज, झ

यत्त्वपरमुक्तम्, व्यासदक्षाद्युपदिष्टवर्त्मनापि स्ववर्णाश्रमोचितभगवदाज्ञानुपालनरूपदिनचर्यासिद्धि, अतश्चो[1]भयसमभेदे कर्मणा परस्परोपरोधप्रसङ्गश्चेति. तत्र तावदविदितश्रौत-स्मार्तवृत्तान्तानामय परस्परोपरोधचोद्यावतार । एव ह्यत्र परिहृतं श्रीकृष्णमुनिभि —

**पाञ्चकालिकधर्मस्य स्मृत्युक्तकर्मभिर्नोपरोध ।**

"पश्विष्टिद[2]र्विहोमाना ससोमाना समुच्चय ।
यथा बहूनामेकस्मिन् तथैवास्यापि कर्मण ॥" इति ।

न चात्र तावानप्युपरोध ।

अपि च तत्रापीदमभिगमनादिपञ्चकमनुप्रविष्ट दृश्यते । व्यासस्तावत्—

**व्यासस्मृतौ अभिगमनसंवादनम् ।**

"ब्राह्मे मुहूर्त उत्थाय धर्ममर्थ च चिन्तयेत् ।
कायक्लेश तदुद्भूत ध्यायीत मनसेश्वरम्" ॥

इत्यारभ्य प्राभातिकस्नान-सन्ध्योपासनप्रकारमुपदिश्य.

"अथागत्य गृह विप्र समाचम्य यथाविधि ।
प्रज्वाल्य वह्नि विधिवत्"

इत्यादिना प्रातर्होम च विधाय, अनन्तरमाह—

"देवादीना नमस्कुर्यादुपहारं निवेदयेत् ।
दद्यात् पुष्पादिक तेषा वृद्धाश्चैवाभिवादयेत् ॥

[1] अतश्चेत्येव सर्वत्र पाठ । पूर्वपक्षानुवादे तु अन्यथेति दृश्यते ।
[2] दर्वी—ख, ग, च

गुरुं[1] चैवाप्युपासीत हित चास्य समाचरेत ।
वेदाभ्यासं तत कुर्यात् प्रयत्नाच्छक्तितो द्विज ॥
जपेदध्यापयेच्छिष्यान् धारयेच्च विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तम ।
वैदिकांश्चैव निगमान् वेदाङ्गानि विशेषत " ॥ इति ।

अत्र दक्षोक्तप्रक्रियया द्वितीयार्धयामसाध्यवेदाभ्यासादिषु [2]अदृष्टार्थांशो जपस्तोत्रशब्दाभ्या जयाख्यसंहितायामुपलक्ष्यते । वृत्तिकर्शितस्य कस्यचित् दृष्टार्थांशो[3]ऽस्ति चेदभिगमनकालसङ्कोचेन परस्मिन्नुपादाने समन्वेति । अत्र देवनमस्कारोपहारनिवेदन-पुष्पादिप्रदानवचनादभिगमन सिद्धम् । देवनमस्कारश्चात्र विष्णुनमस्कार एव स्वरसत प्राप्त । निरुपाधिकदेवत्वस्य देवतान्तरनमस्कारस्यापि तत्रैव विश्रमात् । अत एवादौ "ध्यायीत मनसेश्वरम्" इति ध्येयतयोक्त ईश्वरोऽपि जयादिष्विव सर्वेश्वरेश्वरो विष्णुरेव । "ईश्वरो विक्रमी धन्वी" इति च तन्नामसु[4] पठ्यते । उत्तरत्र[5] "न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम्" इति स्वयमेवाभिधानाच्च । इदमेव विष्णुनमस्कारादिरूपमभिगमनं तत्परशास्त्रेष्वपि नानाप्रकारमुपदिश्यते । "देवादीना" इत्यादिशब्देन पित्रादिसग्रह ।

एवं प्रथमकालकर्तव्यमुक्त्वा द्वितीयकालसाध्यं समाराधनोपकरणसम्पादनरूपमुपादानमाह—

व्यासस्मृतौ उपादानसंवादनम् ।

[1] गुरुश्चैव—क ख, ग, च, झ
[2] अदृष्टाश —ख, ग.
[3] अदृष्टाश —ख , दृष्टाश —क, ग, झ
[4] इति च नामसु—क, ख, च, ज, झ
[5] अत एवोत्तरत्र—क, ख, ग, च, झ

"उपेयादीश्वर चापि योगक्षेमार्थसिद्धये ।
साधयेद्विविधानर्थान् कुटुम्बार्थे ततो द्विज" ॥ इति ।

एतच्च लौकिकेश्वराभिगमन गत्यन्तरहीनस्यापद्विषयम्। स्मरन्ति हि—"नगरप्रवेशनानि[1] च वर्जयेत्" इति । उक्त च [2]श्रीशाण्डिल्यस्मृतौ—

"बुद्धरुद्रादिवसति श्मशान शवमेव च ।
अटवीं राजधानी च दूरत परिवर्जयेत्" ॥ इति ।

कालपञ्चककृत्य तत्र प्रपञ्चित [3]यथायोग सर्वैर्ग्राह्यम् । इदमेव चोपादान भगवदर्थत्वेन भगवच्छास्त्रेषु विधीयते। अत्रापि 'कुटुम्बार्थे' इति न केवलं तादर्थ्यं विवक्षितम्[4] । तद्बुद्धे सर्वत्र प्रतिषेधात् । अगीयत च[5] स्वयं भगवता—

"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन ।
तदर्थं कर्म कौन्तेय मुक्तसङ्ग समाचर" ॥ इति ।

अतो भगवदाराधनरूपयज्ञशिष्टेन कुटुम्बसंरक्षणम[6]पि भगवदाज्ञानुपालन-रूपमेवेति तद्विवक्षया महर्षिणा 'कुटुम्बार्थे' इत्युक्तम् । 'धर्ममर्थं च चिन्तयेत्' इत्यारम्भोक्तार्थचिन्तनमपि धर्मशेषतया । कायक्लेशचिन्तनं तु क्लेशरहितोपायगवेषणार्थम् । स्मरन्ति हि मन्वादय —

[1] प्रवेशनादि—क, झ.
[2] श्री—क, ख, ग, च, झ पुस्तकेषु नास्ति
[3] यथायोग्य—क, ख, ग, च, छ, ज, झ
[4] 'कुटुम्बार्थे' इति वचने केवलतादर्थ्यमविवक्षितम्—क, ख, ग झ
[5] गीयते च—क, च, झ
[6] कुटुम्बभरणमपि—क, ख, ग, च, झ , कुटुम्बरक्षणमपि—ड, छ

"अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ।
अप्रयत्नागता सेव्या गृहस्थैर्विषया सदा" ॥

इत्यादि ।

अथ तृतीयकालकृत्यमाह—"ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत" इत्यादिना । स्नाने चैव भगवदनुसन्धानमाह—

व्यासस्मृतौ इज्यासंवादनम् ।

"अभिमन्त्र्य जलं मन्त्रैरब्लिङ्गैर्वारुणैः शुभैः ।
भावपूतं तदव्यग्रं ध्यायन् वै विष्णुमव्ययम् ॥
आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ।
तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः" ॥ इति ।

तथा—

"त्रिपदा वात्र सावित्रीं तद्विष्णोः परमं पदम् ।
आवर्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम्" ॥ इति च ।

तर्पणेऽपि—

"आदावोङ्कारमुच्चार्य नामान्ते[1] तर्पयामि च ।
देवान् ब्रह्म-ऋषींश्चैव तर्पयेदक्षतोदकैः ॥
तिलोदकैः पितॄन् भक्त्या सूत्रोक्तविधिना ततः" ॥ इति।

अत्र प्रणवपूर्वकत्वेन भगवदात्मकत्वानुसन्धानं विहितम् । एतदेव च नित्ये भाष्यकारैरपि दर्शितम्—"देवानृषीन् पितॄन् भगवदात्मकान् ध्यात्वा

[1] नमोऽन्ते—ग, च, छ

सन्तर्प्य" इति। तृतीयकालसाध्यं साक्षादिज्यारूप समाराधनमेवाह—

"न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम्।
तस्मादनादिमध्यान्त नित्यमाराधयेद्धरिम्॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण च।
नैताभ्या सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि॥
निवेदयीत स्वात्मानं विष्णावमलतेजसि।
तदात्मा तन्मना शान्तस्तद्विष्णोरिति मन्त्रत"॥ इति।

अत्र तद्विष्णोरित्यादे स्तुति न याज्ञवल्क्यादिविहितप्रणवाद्यपकर्षपरा। एवं विष्ण्वाराधनस्य सर्वोत्तरत्वकण्ठोक्ते· पूर्वापरग्रन्थेषु सामान्यतो विशेषतश्च देवतान्तरार्चनवचनमन्तवत्परिमितफलार्थिप्रतिबुद्धेतराल्पमेधस पुरुषानधिकृत्येति मन्तव्यम्। गीयते च "अन्तवत्तु फल तेषा तद्भवत्यल्पमेधसाम्" इति। उक्तं च[1] महाभारते—

"ब्रह्माणं शितिकण्ठं च याश्चान्या देवता स्मृता।
प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम्॥" इति।

आह च बादरायण·—

"नान्यं देवं नमस्कुर्याद्विष्णुपादाब्जसंश्रय।" इति।
"कर्मणा परिपाकत्वादाविरिञ्चादमङ्गलम्।
इति मत्वा विरक्तस्य वासुदेव· परा गति॥" इति च।

[1] उत्तरत्र च—क, ख, ग, ज, झ

इदं च विष्ण्वाराधन भगवच्छास्त्रेषु तैस्तैर्व्यापकमन्त्रप्रभृतिभिस्तत्तदधिकारानुरूपं प्रपञ्चयते। अधिकृतशास्त्रप्रतिपादितस्य पूर्णोपदिष्टस्यैव मुख्यत्व होतृशाखोक्तहौत्रपरिग्रहन्यायेन सिद्धम्। एतेन "अलाभे वेदमन्त्राणा पञ्चरात्रोदितेन वा" इति [1]स्मृतिरपि प्रणवाष्टाक्षर-द्वादशाक्षरादिमन्त्राणामाथर्वण-रहस्याम्नायाद्यधीततया वेदमन्त्रशब्देन सग्रहात् पञ्चरात्रोदितेन वा इत्ययमंशस्तान्त्रिकसंज्ञितप्रत्यक्षेतरश्रुतिमूलमन्त्रान्तरविषयतया योज्य[2]।

**पाञ्चरात्रोक्त समाराधनमेव सर्वेषा मुख्यम्।**

नित्य चैतद्वैश्वदेवादिवद्भगवत्समाराधनम्। 'नित्यमाराधयेद्धरिम्' इति वचनवात्।

**भगवत्समाराधनस्य नित्यत्वम्।**

"शौनकोऽहं प्रवक्ष्यामि नित्य विष्ण्वर्चन परम्।
प्रव पान्तमन्धसोऽधियेत्यर्धर्चविधानत[3]॥"

इति सूत्रान्तरानुसारात्।

"स्नात्वा नित्य शुचि कुर्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चतं चैव समिदाधानमेव च॥"

इति सामान्यतो मनूक्तेश्च। उक्तं चानुशासनिके श्रीपुण्डरीक-नारद-संवादे—

"ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुक।
केशवाराधनं हित्वा नैव याति परा गतिम्॥" इति।

[1] स्मृतिरपि इत्येव सर्वत्र पाठ

[2] योज्या—ख, ग.

[3] धीत्यृचोऽर्धस्य—घ, ड, ज, चोर्धर्च—ख, ग, धि इत्यर्धर्च—क, झ

एवं योगयाज्ञवल्क्यादिष्वपि[1]—

"विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥"

इत्यादिकमुच्यते । एवंविधदेवतार्चनाकरणे च प्रत्यवायं स एवाह—

"यो मोहादथवालस्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति नरकान् सूकरेष्वपि जायते" ॥ इति ।

भगवदर्चावताररहितगृहस्य[2] पुरुषस्याभोज्यान्नत्वमप्यन्यत्रोच्यते—

"केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत्" ॥ इति ।

अनन्तरं च पञ्चमहायज्ञपूर्वकं प्राणाग्निहोत्रं प्रपञ्चयन्नेवमाह[3]—

"स्वाहाप्रणवसंयुक्तं प्राणायान्नाहुतिं ततः ।
अपानाय ततो हुत्वा व्यानाय तदनन्तरम् ॥
उदानाय ततः कुर्यात् समानायेति पञ्चमम् ।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम् ।
ध्यात्वा तु मनसा देवमात्मानं वै प्रजापतिम्" ॥ इति ।

अत्रापि देव-प्रजापतिशब्दौ पूर्वोक्तनयेन विष्णुपरौ मन्तव्यौ[4] । "हृदि

[1] योगयाज्ञवल्क्येनापि—क, ख, ग
[2] अर्चारहितगृहस्थस्य—घ
[3] एवाह—क, ख, ग, च, ज, झ.
[4] मन्तव्यौ—क, ख, ग, झ पुस्तकेषु नास्ति ।

ध्यायन् हरि तस्मै निवेद्यान्न समाहित "। इत्यादिभगवद्यामुनेयोपात्तकर्म-काण्डस्थप्राणाग्निहोत्रविषयव्यासवचनानुसाराच्च, अस्मिन्नपि[1] व्यासवचने देवध्यानं तदेव हृदयस्थहरिध्यानमिति गम्यते। ईदृशं च भोजनमेवानु-यागसमाख्ययान्यत्र व्यपदिश्यते।

अथ[2]ान्यदपि भोजने अपेक्षितं सर्वमुपदिश्य,

**व्यासस्मृतौ स्वाध्यायसवादनम्।**

"भुक्त्वैवं सुखमास्थाय तदन्नं परिणामयेत्।
इतिहासपुराणाभ्या वेदं समुपबृंहयेत्"॥

इति चतुर्थकालसाध्यं स्वाध्यायमाह। एवमन्येऽपि स्मरन्ति—"भुक्त्वो-पस्थाय चादित्य पुराणानि सदा पठेत्" इत्यादि। अत्र परिपूर्णज्ञानस्यो-पबृहणनिरपेक्षस्याधिकारिविशेषस्य द्विषडष्टषडक्षरद्वयादिजप एव स्वाध्याय इति तत्र तत्र तद्विधि। अत एव रहस्याम्नाये वेदान्तरनिषेधेन द्विषट्कमात्रस्वाध्यायविधान निर्व्यूढम्।

यत्पुनरनन्तरं पञ्चमकाल[3]कृत्यमुक्तम् "तत सन्ध्यामुपासीत" इत्युपक्रम्य,

**व्यासस्मृतौ योगोऽपि आक्षेपलभ्य।**

"हुत्वाग्निं विधिवन्मन्त्रैर्भुक्त्वा चान्नमभीष्टकम्।
सभृत्यबान्धवजन· स्वपेच्छुष्कपदो निशि"॥

[1] अस्मिन्नेव—क, ख, ग, झ.

[2] अथ—क, ख, झ पुस्तकेषु नास्ति।

[3] पञ्चकाल—ख, घ

इत्यादि । अत्र रात्रिभोजनवचनेन तदनन्तर योगोऽपि दिवाभोजनानन्तरोक्त स्वयमेवागच्छतीति तदनुक्ति । तथा हि, पूर्व दिवाभोजनानन्तरमेवमाह—

"हुतानुमन्त्रणं कुर्याच्छ्रद्धायामिति मन्त्रत ।
तथाक्षरेण स्वात्मान योजयेद्ब्रह्मणीति हि ॥
सर्वेषामेव योगानामात्मयोग पर स्मृत ।
योऽनेन[1] विधिना कुर्यात् स याति पदमक्षयम्" ॥ इति ।

एवं च निगमयामास—

"इत्येतदखिलेनोक्तमहन्यहनि यन्मया ।
ब्राह्मणाना कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति य ।
स याति नरकान् घोरान् काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधि सुखम् ।
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिन" ॥ इति ।

अत्र परमेष्ठी सर्वकर्मसमाराध्यो विष्णुरेव । विष्णोरेव सर्वकर्मसमाराध्यत्वम्,

"भोक्तार यज्ञतपसा सर्वलोकमहेश्वरम्" ।
"अहं हि सर्वयज्ञाना भोक्ता च प्रभुरेव च" ।
"यज्ञैस्त्वमिज्यसे नित्यं सर्वभूतमयाच्युत" ।
"हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्" ।

[1] योगेन—क, ख, च, छ, ज

इत्यादिषु प्रसिद्धम्। अयं चात्र परमेष्ठी विहितकर्मतोष्यत्वेनोच्यते। परमे पदे तिष्ठतीति परमेष्ठी। स च तमस परस्तात्, तद्विष्णो· परमं पदं' इत्युक्ते शुद्धसत्त्वमये वैकुण्ठसज्ञके[1] लोके वर्तमान पुरुषोत्तम एव। एवं वैयासे धर्मशास्त्रे भगवत पञ्चसु कालेषु भजनं भगवन्नित्यकर्मानुप्रवेशेनैव विहितमिति न कस्यचित् तत्परित्याग उपपद्यते।

यत्तु दक्षेणोक्त कालाष्टकविभागेन दिनकृत्यं तदपि प्रकृतानुगुणमेव।

दक्षोक्तकालाष्टकविभागोऽपि पाञ्चकालिककर्मानुगुण।

तथा हि—

"प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने।
तत् सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम्॥
उदयास्तमयं यावन्न विप्र क्षणिको भवेत्।
नित्यनैमित्तिकैर्युक्तै काम्यैश्चान्यैरगर्हितै॥
स्वक कर्म परित्यज्य यदन्यत् कुरुते द्विज।
अज्ञानादथवा लोभात्त्यागेन पतितो भवेत्"॥ इति।

नित्य-नैमित्तिककर्मणा तदुपकारिकाम्यकर्मणा च यथाकालमनुष्ठानमविच्छेदेन कर्तव्यमिति प्रतिपाद्य,

"दिवसस्याद्यभागेन कृत्यं तस्योपदिश्यते।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्।
भागेष्वेतेषु यत् कृत्यं तत् प्रवक्ष्याम्यशेषत·"॥

इति कालाष्टकविभागेन कृत्यविभागं सामान्यत प्रस्तुत्य,

[1] वैकुण्ठादि—घ, ङ, ज

दक्षस्मृतौ प्रथमद्वि-
तीय कालकर्तव्यस्या-
भिगमनेऽन्तर्भाव ।

“उष काले तु सम्प्राप्ते शौच कृत्वा यथार्थवत् ।
तत स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्” ।

इत्यादिना,

“सन्ध्याहीनोऽशुचिर्नित्यमनर्ह सर्वकर्मसु ।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्” ॥

इत्यन्नेन स्नानाचमन-सन्ध्यावन्दनादीनि यथावत् प्रतिपाद्य,

“सन्ध्याकर्मावसाने तु स्वय होमो विधीयते ।
स्वय होमे फलं यत्तु न तदन्येन जायते ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पति ।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हि” ॥

इति प्राभातिकं होम चोक्त्वानन्तरमाह—

“देवकार्य तत कृत्वा गुरुमङ्गलवीक्षण[1] ।
देवकार्यस्य सर्वस्य पूर्वाह्णस्तु विशिष्यते ॥
देवकार्याणि पूर्वाह्णे मनुष्याणा तु मध्यमे ।
पितॄणामपराह्णे तु कार्याण्येतानि यत्नत·” ॥ इति ।

अत्र प्रातर्होमानन्तर देवकार्यविधानात् तत्कालचोदितं भगवदभि-
गमनमपि सामान्यत उपदिष्टं भवति । यत्त्वनन्तरमुक्तम्—

[1] वीक्षणम्—छ, ज

"द्वितीये तु तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जप ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥" इति

तदप्यनुगुणम् ।. उक्तानि हि जयाख्यसहिताया जप-ध्यानार्चन-स्तोत्राणि प्रथमप्रहरपर्यन्तेऽभिगमने ।.

उपादानं चानन्तरमेवाह—

**दक्षोक्ततृतीयकाल-कृत्यस्य उपादाने-ऽन्तर्भाव ।**

"समित्पुष्पकुशादीना स काल समुदाहृत ।
तृतीये तु तथा भागे पोष्यवर्गार्थसाधनम् ॥" इति ।

इदं चोक्तं जयाख्यसंहितायाम् "तत पुष्पफलादीनाम्" इत्यादिना । अत्र पोष्यवर्गार्थसाधनमित्येतत् प्रागुक्तन्यायेन भगवत्प्रीणनतयैवेति ग्राह्यम् । आह चात्र प्रात स्नानं[1] प्रक्रम्य पूर्वमेव सर्वेषु कर्मसु भगवदनुसन्धानम्—

"ध्यायेन्नारायणं[2] देव स्नानादिषु च कर्मसु ।
ब्रह्मलोकमवाप्नोति न चेहा जायते पुन ॥" इति[3] ।

असूत्रयच्च भगवान् शौनक —"हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च ।" इति । अत्र कर्मशब्देनानवच्छेदात् दृष्टादृष्टसर्वकर्मसग्रह । अन्यदेवत्य[4]-

[1] स्नानादि—क, ख, ग, स्नानादीन्—च, ञ
[2] ध्यायन्—क, ख, ग, च, ञ
[3] इति च—घ
[4] अन्यदैवत्य—च

कर्मण्यपि तदन्तरात्मभूतो हरिरनुसन्धेय इत्येवकाराभिप्राय । नित्यमित्यनेन काम्यत्व-नैमित्तिकत्वशङ्काव्युदास । स्वत प्राप्तं कर्मकाले स्मरण चकारेण संगृह्यते । एवं शास्त्रीयेषु सर्वेषु[1] कर्मसु भगवदनुसन्धानं नित्यमिति सिद्धम् । एतदेव रागप्राप्तेष्ववर्जनीयमिति जयाख्यसंहिताया नियमेषु पठ्यते—

"शयनासनयानादावासक्तश्चापि[2] भोजने ।
हृद्गतं न त्यजेद्ध्यानमानन्दफलद हि यत्" ॥ इति ।

सर्वसग्रहेण तूच्यते—

"आलोड्य सर्वशास्त्राणि विचार्य च पुन पुन ।
इदमेकं सुनिष्पन्न ध्येयो नारायण सदा" ॥ इति ।

एतच्च नित्यत्वात् स्वरूपानुरूपानन्दफलत्वेन स्वयं प्रयोजनत्वाच्च स्वतन्त्र-प्रपत्तिशास्त्रार्थनिष्ठैरपि[3] दुस्त्यजम् । उक्त चैवं स्वयप्रयोजनत्व नारायणमुनिभि —

"वृत्ति स्वामिनि दासस्य स्वरूपानुगुणा शुभा ।
भक्तिश्रद्धासमायुक्ता तत्समाराधन विदु ॥
किं किं न साध्यं भगवदाराधनपरैर्नरै ।
वैष्णवाना विशेषेण स्वयमेतत्प्रयोजनम्" ॥ इति ।

भगवदनुसन्धानविच्छेदोऽपि हि पुरुषार्थहानित्वेन स्मर्यते—

"यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्ति सा च विक्रिया" ॥ इति ।

[1] सर्वेषु—क, ख, ग, झ पुस्तकेषु नास्ति
[2] असक्तश्चापि—घ, छ, ज
[3] शास्त्रनिष्ठैरपि—क, ख, ग, च, ज, झ

पुरुषार्थहानि, काम-क्रोधाद्यरीणामवकाश, अनात्मादिष्वात्मबुद्धिहेतु, अस्वाभाविकसुख-दु खकारणं चेत्यर्थ ।

"एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम्" ॥ इति

खिन्नवृत्तीनामन्यपराणामपि—

"व्यापृतेनापि मनसा विष्णुः सेव्योऽन्तरान्तरा ।
मेधिबद्धो भ्राम्यमाणो घासग्रासं करोति गौ" ॥

इत्यादिभिर्यथावसर क्षुच्छान्तिकरकर्मसमाविना तावन्मात्रप्रयोजनत्वेन भगवत्सेवन स्मर्यते । तदिह सिद्धोपायस्य उपायं साधयतश्च भगवत्कैङ्कर्य अरोगस्य आरोग्यार्थिनश्च क्षीरास्वादवत् स्वयंप्रयोजनमेव ।

**दक्षोक्तचतुर्थ-पञ्चम-कालकृत्यस्य इज्यायामन्तर्भाव ।**

यत्तु—"चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत्" इत्यादिना स्नानभेदानप्युपदिश्य,

"पञ्चमे तु तथा भागे संविभागो यथार्हत ।
पितृदेवमनुष्याणा कीटाना चोपदिश्यते" ॥

इत्यादिना—

"संविभाग तत कृत्वा गृहस्थ शेषभुग्भवेत् ।
भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्" ॥

इत्यन्तेन सग्रहेण देवतार्चन[1]-भोजनपर्यन्तमुक्तम् । तत्रापि अवान्तरपर्वभेदेन द्विधा विभक्तोऽय काल एव ‘इज्याकाल’ इत्येकीकृत्य निर्दिश्यत इति न विरोध । अत्र देवसंविभागशब्दनिर्दिष्टमर्थमुत्तरत्र देवतार्चनशब्देन विशेषयामास—‘सन्ध्या स्नान जपो होम स्वाध्यायो देवतार्चनम्’ इति ।

एवम् ‘इतिहासपुराणाभ्या षष्ठ सप्तममभ्यसेत्’ इत्युक्त कालद्वय स्वाध्यायकाल इत्येकीकृतम् । अत्र मात्रया [2]कालवैषम्य मतभेदादुपपद्यते । ‘अष्टमे लोकयात्रा तु बहि - सन्ध्या तत पुन’ इत्युक्तलोकयात्राकालविभागस्तु लोकपराङ्मुखे भगवदेकान्तिनि नातीवापेक्षित इति तदनुक्ति । यथोक्त पूर्वश्रवे[3]—

**दक्षोक्तषष्ठ-सप्तम-कालकृत्यस्य स्वाध्यायेऽन्तर्भाव । अष्टम-कालोक्तलोकयात्रा तु न परमैकान्तिनाम् ।**

“गुरोर्गुरौ सन्निहिते वृत्ति कार्या यथा गुरौ ।
विद्यागुरुष्वनन्येष्वप्यन्या[4] वृत्ति स्वयोनिषु” ।। इति

उक्त ज ब्रह्मविद्भिः—

“अद्यप्रभृति हे लोका यूय यूयं वय वयम् ।
अर्थकामपरा यूय नारायणपरा वयम् ।।
नास्ति सगतिरस्माक युष्माक च परस्परम् ।
वय तु किङ्करा विष्णोर्यूयमिन्द्रियकिङ्करा ” ।। इति ।

‘अहेरिव गणाद्भीत’ इत्यादिषु च भिन्नशीलगुणपरिहार उपदिश्यते । सन्यासप्रकरणे ‘समानशीलै सहवासो न दोषाय’ इति कपिलानुशिष्टस्य

[1] देवार्चनादिक—घ, ङ, छ, ज
[2] कालत्रयवैषम्य—क, ख, ग, च
[3] पूर्व (ग्रन्थे) श्रवे—च
[4] विद्यागुरुषु चान्येषु—क, ख, ग

कैमुत्येन गृहस्थादिष्वपि मोक्षार्थिषु तुल्यप्रसरत्वात् । आमनन्ति च बह्वृचा —'नेदविदनिदविदा समुद्दिशेन्न सह भुञ्जीत न सधर्मादि[1] स्यात्' इति । तस्येदमुपबृंहणम्—

'आविद्य[2] प्राकृत प्रोक्तो वैद्यो वैष्णव उच्यते ।
आविद्येन[3] न केनापि वैद्य किंचित् समाचरेत् ॥" इति ।
'अहन्यहनि धर्मस्य योनि साधुसमागम ।
मोहजालस्य हेतुर्हि[4] धूर्तैरेव समागम ॥" इति ।

तथा—

"मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिण ।
तेषा वै छिन्नतृष्णाना योगक्षेमवहो हरि" ॥
"अनन्याश्चिन्तयन्तो मा ये जना पर्युपासते ।
तेषा नित्याभियुक्ताना योगक्षेम वहाम्यहम्" ॥
"शरीरारोग्यमर्थाश्च भोगाश्चैवानुषङ्गिकान् ।
ददाति ध्यायिना नित्यमपवर्गप्रदो हरि" ॥
"वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थिति ।
न शौरिचिन्ताविमुखजनसंवासवैशसम्" ॥

[5]इत्यादिभिर्ब्रह्मविदा लोकनैरपेक्ष्य सिद्धम् । अत एव हि लौकिकेश्वराभिगमनमप्यापद्विषयमिति पूर्वमेवोक्तम् ।

[1] सधर्मा—क, ख, ग, च, झ
[2] अवैद्य —क, च
[3] अवैद्येन—क, च
[4] योनिर्हि—घ, ङ, छ, ज
[5] इत्यादिभिश्च—घ, ङ

यत्तु पश्चादुक्तम्—

'प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत् ।
यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते" ॥ इति ।

**दक्षस्मृतौ वेदाभ्यासस्य योगेनाविरोध ।**

अत्र योगासमर्थस्य तच्छेषभूत स्वाध्यायः, समर्थस्य तु योग एवेति न समानकालतदुभयविधायकशास्त्रद्वयविरोध । विस्तरेण चाह योगमन्त्रे दक्ष· । तत्र चैष सार प्रोक्त —

"सर्वोपाधिविनिर्मुक्त क्षेत्रज्ञ ब्रह्मणि न्यसेत् ।
एतद्ध्यानं च योगश्च शेषोऽन्यो ग्रन्थविस्तर " ॥ इति ।

याज्ञवल्क्यश्च—'वृत्तिहीन मन कृत्वा क्षेत्रज्ञं ब्रह्मणि न्यसेत्' । इति । वृत्तिहीन वाह्यवृत्तिरहितमित्यर्थ । अत स्वाध्याय-योगयोरेकैकस्मिन् प्रदोषादिकाले तदशभेदेन क्रमात् प्रयोगेऽपि[1] न विरोध । 'यत्रैकाग्रता तत्राविशेषात्' इति शारीरकसमर्थितप्रकारेण एकाग्रतानुगुणकालान्तरेऽपि स्वगुणभूतस्वाध्यायादिनिरोधेनापि योगोऽनुष्ठातु युक्त । याम-यामार्धविभागे स्वाध्यायदिषु नातिदूरपूर्वापरन्यूनाधिकनाडिकाविभागादयस्तु मतभेदतया निर्वाह्या इति । एवं स्मृत्यन्तराण्यपि संवादनीयानि[2] ।

**पञ्चकालधर्मावश्यकतानिगमनम् ।**

अत पञ्चसु कालेषु तैस्तैः कर्मभिर्भगवत्सेवनस्य नित्यत्वेन विधानात्, व्यास-दक्षाद्युक्तमर्यादया भगवदाज्ञानुपालनेऽपि नीरन्ध्रभगवदुपासनसिद्धे अधिकृतशास्त्रोक्त-

[1] प्रयोगभेदेऽपि—क, ख, ग, ङ

[2] संपादनीयानि—क, ख, ग, च, ङ.

प्रशस्ततमपूर्णशास्त्रार्थपरिग्रहौचित्यस्य प्रागेव दर्शितत्वात्, [1]भाष्यकार-तदन्तेवासिप्रभृतिभिश्च प्रपत्त्येकनिष्ठैस्तदनुसारेण भगवद्भजनस्योक्तत्वात् तद्योग्यैश्चाद्ययावत्तदनुष्ठानस्य यथाशक्ति परिग्रहात्, अनिपुणपरित्यागस्यानादरणीयत्वात्[2] "यच्छील स्वामी तच्छीला प्रकृति" इति न्यायेन

"नाहङ्कारान्न संरम्भान्नामर्षान्नार्थकारणात् ।
न [3]हेतुवादाल्लोभाद्वा धर्मं [4]जह्या कथचन" ॥

इति वदता भगवता वसुदेवनन्दनेन स्वामिना तद्दासै समशीलैर्भवितव्यत्वात्, स्वामिसप्रीणनस्वरूपानुरूपवृत्तेश्च सर्वाभिमतत्वात्, तत्प्रीणनस्य च नित्याना मुक्तानामिव च मुमुक्षुभि प्रत्यक्षेणावगन्तुमशक्यत्वात्, 'श्रुति स्मृतिर्ममैवाज्ञा' इति तदुक्त्यनुसारेण शास्त्रादेव तत्प्रीणननिश्चयात्, 'येनास्य पितरो याता,' 'पञ्चरात्रोदितान् वापि ये स्ववंश्यैरनुष्ठिता' इत्यादिप्रतिपादितप्रकारेण तत्तत्संहिताभेदभिदुरेषु परमात्मसंप्रीणनप्रस्थानभेदेषु काचिन्मर्यादामवलम्ब्य स्वतन्त्रप्रपत्तिनिष्ठैरपि स्वाधिकारोपदेशाद्यनुरूपम्

"कुसीदमेके विहरन्ति सर्वे
य[5] आशीर्वदन्तो ददत्यत्र किंचित् ।
पर्यन्तलोकास्त्विह ते भवन्ति
अनाशिषस्तु विजयायानन्ताय" ॥

[1] भाष्यकारान्तेवासि—क, ख, ग, च, झ.
[2] अनिपुणपरित्यागस्यानादरणीयत्वात्—क, ख, ग, झ पुस्तकेषु न दृश्यते ।
[3] भेदवादात्—क, ख, ग, झ
[4] जह्यात्—क, ख, च, छ, झ
[5] यच्छब्द च कोशे नास्ति

"यस्य सर्वे समारम्भा अनाशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च पण्डित" ॥

"अथ भो[1] भगवन्तं याचेत. न भो इत्याह आश्रयितव्यो भगवान् भवति न त्वेव याच्य" इति रहस्याम्नायादिचोदित-प्रकारेण प्रयोजनान्तरप्रार्थनारहितैः स्वयप्रयोजनत्वात् पञ्चस्वपि कालेष्व-विच्छेदेन भगवत्सम्प्रीणनरूपशास्त्रीयकैङ्कर्यव्यापारेण यावद्व्यासविद्याख्य-यागावभृथ आगामिनिश्रेयसकालनिर्विशेषमवन्ध्यकालो यापनीय इति सिद्धम् ॥

अयमत्र सार —

**पाञ्चकालिकधर्मानु-ष्ठानप्रयोजनम् ।**

माङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधू ।
तथा प्रपन्न शास्त्रीयपतिकैङ्कर्यपद्धतिम् ॥
यद्वन्मङ्गलसूत्रादेस्त्यागे सरक्षणेऽपि वा ।
रक्षेन्निरोधाद्भोगाद्वा[2] पतिस्तद्वदिहापि न ॥ इति ।

काल सर्वमिहाभ्युपेत्य भगवत्कैङ्कर्यमादेशिक
तत्पर्वक्रमपञ्चके किमु वय मान्ये विमन्येमहि ।
त्यक्त्वा विशतिपञ्चक शतमिव प्राप्तु मुधा मुह्यता-
मस्माकं सदसद्विवेकिषु मतं हासास्पद मा स्म भूत् ॥

[1] अयि भो—क, च, झ
[2] निरोधैर्भोगैर्वा—क, ख, निरुध्याद्भोगैर्वा—च

अनुपुरमनुरुन्धन्नान्तरध्वान्तराशि[1]
न च पुरत उदेता नास्तमेता च पश्चात् ।
स्वविषयनिजधर्मान् शुद्धसत्त्वान् स सत्त्वान्[2]
अवतु भवतुषारादक्षरव्योमसूर्य ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीपाञ्चरात्ररक्षाया

नित्यानुष्ठानस्थापनाख्य

द्वितीयोऽधिकार ।

---

[1] अनुपुरमिति श्लोक एष —क, ख, ग, च, झ पुस्तकेषु काल सर्वमिति श्लोकस्य पूर्व दृश्यते

[2] सतत्त्वान् —छ

॥ श्री ॥

# नित्यव्याख्यानाख्य

## तृतीयोऽधिकार ।

[1]अथोपक्रम्यते नित्यकर्तव्यक्रमसक्रम [2] ।
नाथयामुनपूर्णादिसम्प्रदायसरित्पथे ॥

सर्वकर्मसाधारणानि अङ्गानि ।

अत्र यदुक्त भगवद्यामुनाचार्यै श्रीमद्गीतार्थसग्रहे——

"ज्ञानी तु परमैकान्ती परायत्तात्मजीवन ।
तत्सश्लेषवियोगैकसुखदु खस्तदेकधी ॥
भगवद्ध्यानयोगोक्तिवन्दनस्तुतिकीर्तनै ।
लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रिय· ॥
निजकर्मादिभक्त्यन्तं कुर्यात् प्रीत्यैव कारित· ।
उपायता परित्यज्य न्यस्येद्देवे तु तामभी ॥" इति ।

[1] स पञ्चपरतत्त्वज्ञ पञ्चकालपरायण ।
जितपञ्चेन्द्रियक्लेश पञ्चभ्यो नागमद्वयम् ॥
इत्यय श्लोक तृतीयाधिकारस्यादौ ङ, छ कोशयो दृश्यते
[2] सचय —क, ख, झ , स (क्रम ) चथ.—च

इद तावत् आप्रबोधात[1] आनिशान्तमनुष्ठीयमानेषु कर्मसु[2] न विस्मर्तव्यम् । समयाचारनियमाध्यायश्रीवैष्णवधर्मशास्त्रादिकथित परमैकान्तिना विशेषकर्तव्यं च सर्वं यथावदधिगन्तव्यम् । सर्वेषु च कर्मारम्भेषु भगवच्छास्त्राद्युक्तत-त्तन्मन्त्र , 'भगवानेव'इत्यादिकं भाष्यकारनित्योक्त च वाक्यं पठितव्यम् । अन्ते च सर्वं स्वनियाम्येत्यादिक्रमेण ममन्त्रक भगवति समर्पणीयम् । [3]न चैतदखिलमपि उपासनोपायाधिकार्यन्तरमात्रविषयमिति भ्रमितव्यम्[4] । तथा सति तत्सहपठितगुरुभजन-निर्माल्यभक्षणनिषेधादेरपि तावन्मात्रविषय-कत्वप्रसङ्गेनालेपकवादावतारप्रसङ्गात् । प्रपञ्चित चैतत पूर्वस्मिन्नधिकारे, निक्षेपरक्षादिपु च ।

तत्र भाष्यकारोक्तनित्यानुष्ठाननिष्ठस्य ब्राह्ममुहूर्तादिप्राप्तौ यत्कर्तव्य तत्तावत तच्छिष्यप्रशिष्यग्रन्थ तन्मूलभूतसहिताद्यनुसारेण सगृह्यते । पूर्वमेव यथाकाल विश्रान्त्यै निद्रा निर्विश्य प्राप्ते यामिन्या पश्चिमे यामे सावधानेन निद्रा परित्याज्या । 'यामद्वय शयानस्तु', 'युक्तस्वप्नावबोधस्य' इत्यादिषु स्मरणात् । येषु च[5] योगग्रन्थेषु कृत्स्नाया रात्रौ निश्छिद्रयोगार्थं स्वप्न-समयसभावितेन्द्रियक्षोभादिपरिहाराय च जागर प्रतिपाद्यते, ते[6] विश्रम-निरपेक्षयोगदशापन्नपूर्णारोग्यपुरुषविशेषविषया[7] । तत्तत्पुरुषशक्त्यनुसारेणैव हि नित्य-नैमित्तिक-काम्यविषयाणा सर्वेषा शास्त्राणा प्रवृत्ति । अत एव हि

**ब्राह्ममुहूर्तकर्तव्याना उपक्रम ।**

[1] आप्रभातात्—क
[2] सर्वेषु कर्मसु—च
[3] न चैतदखिलमुपासनाधिकार्यन्तर—क, ख, ग, च, झ
[4] मन्तव्यम—ख, ग
[5] केषुचित्—ग
[6] स तु—क, ख, ग, झ
[7] विषय —क ख, ग, झ

धर्मसाधनेषु प्रधानतमं शरीरं रक्षितुं प्रवृत्ते 'ब्रह्मा स्मृत्वायुषो वेदमुपवेदमथर्वणाम्' इत्यथर्वणवेदोपवेदभूतायुर्वेदे "ब्राह्मे मुहूर्ते उत्तिष्ठेज्जीर्णाजीर्णे निरूपयन्" इत्यभिधाय, अजीर्णे पुनरासन्ध्यागमनात् स्वापो विधीयते। ईदृशसर्वपुरुष[1]क्रोडीकारेण हि 'युक्तस्वप्नावबोधस्य' इति गीतम्। तस्मात् सर्वेषु मानवेषु प्रायिकतयौत्सर्गिकौ निद्राप्रबोधकालौ 'यामद्वयं शयानः' इत्यादिभिरुपदिश्यत [2]इति विषयव्यवस्था।

ब्राह्ममुहूर्तप्रबोधः तत्फलं च।

एवं प्राप्तकालमपनीतनिद्रातमस्कत्वेन सत्त्वस्थः प्रसन्नधीश्च भवति। तेन पूर्वयामानुसंहितमन्तःकरणचित्रभित्तिगतं विचित्रशुभाश्रयविशिष्टं ध्येयं निद्रातमोऽन्तरितमपि तत्कालेसमुन्मुषितसत्त्वसन्धुक्षितसात्त्विकज्ञानरूपप्रदीपप्रकाशेन सम्यगवलोकयेत[3]। तत [4]एव चापररात्रयोगो निष्पद्यते। य एष सात्त्वतादिषु ब्राह्ममुहूर्तात् पूर्वमेव कर्तव्यत्वेन प्रपञ्च्यते—

"समुत्थायार्धरात्रेऽथ जितनिद्रो जितश्रमः।
कमण्डलुस्थितेनैव समाचम्य तु वारिणा।
गुरून् देवान् नमस्कृत्य ह्युपविश्याजिनासने" ॥

इत्यादिना एतत्संहितानिष्ठानामेष योगकालनियमः[5]। निःशब्दे सर्वसुषुप्तिकाले च ऐकाग्र्यातिशयसंभावनया च तद्विधिः। तत्तत्पुरुषशक्त्याद्यनुसाराच्च तत्तत्कालविधेरविरोध इत्युक्तम्।

[1] पुरुषशब्दः घ पुस्तक एव दृश्यते
[2] उच्यत इति—घ
[3] अवलोक्यते—घ
[4] स एव—छ
[5] एष कालनियमः—क, ख, ग, झ

**निद्रान्ताचमनादिकम्।**

अत्र—

"वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले" ॥

इत्यादिभिर्मन्वाद्युपदिष्टसोदककमण्डलुधारणादिकं भगवद्योगिनोऽप्यनपोदितमिति ज्ञापनाय 'कमण्डलुस्थितेनैव' इत्युक्तम्। निद्रान्तनिमित्ततया,[1] उत्तरकर्माङ्गतया चात्र तन्त्रेणाचमनम्, तुशब्देन स्वशास्त्रोक्तविशेषः तोया-[2]लाभदशायां दक्षिणश्रवणस्पर्शश्च व्यज्यते। स्मरन्ति हि—

"सम्यगाचमनाशक्तावलाभे[3] सलिलस्य च।
पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत्" ॥ इति।

अत्र मन्त्रचतुष्कादिव्यतिरिक्तं सर्वं संहितान्तरनिष्ठानामपि साधारणम्। अजिनासन इति "चेलाजिनकुशोत्तरम्" इति गीते प्रधानांशग्रहणम्। "ततस्त्वभिमतेनैव[4] त्वास्ते पद्मासनादिना" इति जितासनगतत्वं विधीगते।

**अपररात्रयोगः।**

यच्च "समं कायशिरोग्रीवं धारयन् अचलं स्थिरम्" इत्यादिना योगदशापेक्षितं गीतं तदपि सर्वमिह सविशेषमुपदिश्यते[5]।

[1] निद्रानिमित्ततया—क, च, झ.
[2] तोयाभाव—क, ख, ग, च, झ.
[3] शक्तावभावे—क, ख, ग, च, झ.
[4] अभिमतेनैव तिष्ठेत्—क, ख, ग, च, झ.
[5] समं कायेत्यारभ्य उपदिश्यते इति यावत् घ कोशादन्यत्र विमुक्तम्।

"समं कायशिरोग्रीवं सन्धाय सह वक्षसा ।
दृङ्नासाग्रगता कार्या विनिमीलितलक्षणा ॥
जिह्वातालुतलस्था च सान्तरे दशनावली ।
ईषदोष्ठपुटौ लग्नौ धार्यौ द्वौ बाहुकूर्परौ ॥
ऊरुमध्यप्रदेशे तु हस्तौ नाभेरधो[1] न्यसेत्
अधरोत्तरयोगेन वामदक्षिणतः क्रमात् ॥
अचलं योगपट्टेन त्वेवं सन्धार्य विग्रहम् ।
संकोच्यापानदेशात्तु ह्युपरिष्टात्तमेव हि ॥
विकास्य वर्णहीनेन[2] हार्देनालक्ष्यमूर्तिना ।
विषयान्तर्निविष्टं तु क्रमाच्चित्तं समाहरेत् ॥
कुर्याद्वै बुद्धिलीनं तु तां च कुर्यात् स्वगोचरे ।
समाधायात्मनात्मानं सह मन्त्रैस्ततः[3] क्रमात् ॥" इति ।

**योगे तादात्म्यभावनस्य उपपत्तिः ।**

यत्पुनरिह योगदशायां तादात्म्यभावनमुपदिश्यते—

"ततो जाग्रत्पदस्थं चाप्यनिरुद्धं च मन्त्रपम् ।
परावर्त्य शतं बुद्ध्या तदभिन्नेन चेतसा ॥
तन्मन्त्रजपसामर्थ्यात्तादात्म्यस्थितिबन्धनात् ।
महिमा तु सविज्ञानस्तदीयस्तस्य जायते ॥
अभ्यासाद्वत्सरान्ते तु तदद्वैतसमन्वितः ।
अथ प्रद्युम्नमन्त्रं तु परावर्त्य शतद्वयम् ॥

[1] नाभावधः—घ, ङ, छ
[2] विकास्यावर्णहार्णेन—घ, ङ, छ
[3] मन्त्रैः स्वतः—क, झ

योऽह सोऽहमनेनैवाप्यद्वैतेन सदैव हि ।
एवमेव समभ्यासान्मतिमाश्छिन्नसशय ॥
तत्प्रभावाच्च तेनैव तथा कालेन जायते ।
अनेन क्रमयोगेन जपध्यानान्वितेन तु ॥
निखिलं चाप्यधीकुर्यान्मन्त्रबृन्दं पुरोदितम्[1] ।
यावदाभाति भगवान् स्थाने पूर्वोक्तलक्षणे ॥
प्रलीनमूर्तिरमलोऽप्यनन्तस्तेजसा निधि ।
चिदानन्दघन शान्तोऽप्यनौपम्यो ह्यनाकुल ॥
समाधायात्मनात्मानं तत्र त्यक्त्वा जपक्रियाम् ।
ध्यातृध्येयाविभागेन यावत्तन्मयता व्रजेत ॥
यदा सवेद्यनिर्मुक्ते समाधौ लभते स्थितिम् ।
अभ्यासाद्भगवद्योगी ब्रह्म सम्पद्यते तदा ॥" इति

अत्र न स्वरूपैक्यादिक विवक्षितम् । शरीर-शरीरिणोर्जीवात्म-परमात्मनो शारीरकसमर्थितप्रकारेणाविरुद्धस्य, अस्पृष्टलक्षणादोषस्य, अशेषशास्त्रानुगुणस्य, अनुकूलतर्कशालिन , 'तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधव[2]' इत्युपबृहणशत[3]सुस्थितस्य 'अवस्थितेरिति काशकृत्स्न' इति सूत्रितस्य, पूर्वापरग्रन्थसहितान्तरानुगुणस्य विशिष्टाद्वैतस्य विवक्षितत्वात् । 'ध्यातृध्येयाविभागेन' इत्यादिना च निर्विकल्पकसमाध्यवस्थोच्यते । 'ब्रह्म सम्पद्यते तदा' इति च परमसाम्यरूपफलप्रतिपादनम् । उक्त च ब्रह्मैव भवतीत्यादिवाक्यान्यधिकृत्य भाष्यकारै —"प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरिति" इति । अन्यथा "निरञ्जन परम साम्यमुपैति"

[1] निखिल वापि—क, ख, झ
[2] (तन्मयत्वेन साधव )—च
[3] इत्याद्युपबृहण—घ

"मम साधर्म्यमागता" इति श्रुति-स्मृतिभ्यां विरोधः। तथा च श्रुत्यन्तरम्— "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम" इति। साम्ये च स एवेति व्यपदेशः श्रुतावेव दृश्यते—"वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वा इमान् लोकानभिजयति" इति। एवं च सति[1] 'महिमा तु सविज्ञानस्तदीयस्तस्य जायते' इत्यादिप्राकरणिकग्रन्थसामञ्जस्यं भवति। शारीरके च फलपादे मुक्तस्याविर्भूतस्वरूपस्य गुणाष्टकविशिष्टस्य जगद्व्यापारव्यतिरिक्तं भोगमात्रसाम्यं च सूत्रितम्— 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च', 'भोगमात्रसाम्यलिङ्गाच्च' इति। अत उपायदशायां फलदशायां च विशिष्टैक्यानुसन्धानमेवात्र विवक्षितम्।

एतेन लाञ्छनन्यासाद्यनन्तरं 'मुद्रां बध्वा [2]स्मरेद्देवं देवोऽहमिति भावयेत्' इति समाराधनारम्भग्रन्थोऽपि[3] निर्व्यूढः। 'बध्वा मूलादिकां मुद्रां देवोऽहमिति भावयेत्[4]' इत्यादिसंहितान्तरग्रन्थाश्चात्र तुल्यन्यायाः। अत्र च 'मनो ब्रह्मेत्युपासीत' इत्यादिष्विवेतिकरणादिवशात् दृष्टिविधित्वं सुस्पष्टम्। अत एव हि तथाविधभावनयाप्यनन्तरं योग्यतापादनमात्रमुक्तम्—

"न्यासेन देवमन्त्राणां देवतादात्म्यभावनात्।
अप्राकृताङ्गकरणात् पूजामर्हति साधकः"॥ इति।

अन्यथा—

"देवतारूपमात्मानमर्चयेदर्घ्यधूपकैः।
धूपावसानिकैर्भोगैर्ध्यात्वा नारायणं हृदि"।

[1] एवं सति—घ
[2] स्मरेद्ध्यान—क, ख, ग, घ, ज
[3] समाराधनग्रन्थोऽपि—ङ, छ
[4] इति समाराधन इत्यारभ्य भावयेत् इत्यन्त—क, ख, ग, च, ज कोशेषु विमुक्तम्.

इति समनन्तरकर्तव्य कथं सगच्छते। न हि स्वरूपैक्यभावनाया हृदि पुनर्नारायणध्यानमिति किंचित् सात्। न च शेषवृत्तौ प्रवर्तमानस्य स्वरूपैक्यभावनं जाघटीति। अतो दृष्टिविधिपक्षोऽत्र स्वीकार्य। यद्वा गत्यन्तरे संभवति दृष्टिविधिविवक्षा च न युक्ता। अतस्तच्छरीरतया तादधीन्यादिभि सर्वानुवृत्तस्तद्व्यपदेश। तदभिप्रायेण च स्वनियाम्येत्यादिकं वक्ष्यति भाष्यकार।

योगस्वरूपे शाण्डिल्यस्मृति श्रीकृष्णमुनिश्च।

योगे च[1] भिन्नलक्षणयो परमात्म-प्रत्यगात्मनो सबन्धानुसन्धानमेवेति शाण्डिल्यस्मृतिवाक्येन स्थापित पूर्वाधिकारे। उक्तं च विप्रकीर्णे सात्त्वते नित्यं सगृह्यान्ते श्रीकृष्णमुनिभि स्वरूपैक्यादिबुद्धेरवैदिकत्वम्—

"चेतनस्त्वेक एवेति मतिर्या केवला क्रिया।
फलतीति मतिस्ते द्वे वेदाप्रामाण्यबुद्धिजे।
स एन प्रीत प्रीणाति ब्राह्मणस्यानुगे न ते" ॥ इति।

योगमध्ये श्रान्तौ विश्रमाभ्यनुज्ञा।

एव यथावदनुष्ठितयोगस्य श्रान्तिमभावनाया ब्राह्ममुहूर्तात् पुनर्विश्रमोऽनुज्ञाप्यते—

"तत श्रमजय कुर्यात्त्यक्त्वा ध्यानासने क्रमात्।
समासीत शयानश्च[2] कालं रात्रिक्षयावधि" ॥ इति।

ब्राह्ममुहूर्ते विशेषकर्तव्यानि, हरिकीर्तन च।

तत्र[3] ब्राह्ममुहूर्तप्रभृतिविशेषकर्तव्ये[4] दिङ्मात्र दर्शितम्—

[1] योगे च इत्येव सर्वत्र पाठ। योगश्च इति चेत् साधीयान्। दृश्यता च शाण्डिल्यस्मृतेरपात्त 'तत्सबन्धानुसन्धानमिति योग प्रकीर्तित' इति वचन पूर्वाधिकारे (५९-पुटे)
[2] समास्ते शयनस्थश्च—घ, समाप्ते शयतस्थश्च ङ च, छ
[3] अत्र—क, ख, ग, च, झ.
[4] कर्तव्य—क, झ

"ब्राह्मे मुहूर्ते संप्राप्त उत्थाय शयनात्तत ।
स्नात्वाभ्यर्च्य जगन्नाथं समिदाधानमाचरेत्" ॥

इत्यादिना । तदिद संहितान्तरेषु विस्तृतम् । अत्र हरिर्हरिर्हरिरिति मुहु संकीर्तयन् हरिमेव चिन्तयन्नुत्तिष्ठेत् । अत्र हरिशब्दसंकीर्तनं सप्तकृत्व इति श्रीमद्गृध्रसरोमुनिभिर्नित्यक्रमसग्रहे[1] निबद्धम् । उत्तिष्ठतश्च हरिशब्दपूर्वक-भगवदनुस्मरण श्रीविष्णुधर्मे भगवता शौनकेनोक्तम्—

"उत्तिष्ठश्चिन्तय हरि व्रजश्चिन्तय केशवम् ।
भुञ्जंश्चिन्तय गोविन्द स्वपश्चिन्तय माधवम्" ॥ इति ।

सर्वकर्मारम्भावसानेषु च हरिसस्मरण तेनैव स्वकीयसूत्रेऽप्युक्तम्—'हरिमेव स्मरेन्नित्य कर्मपूर्वापरेषु च' इति । स च निद्रानन्तरमनुस्मर्तव्यो हरि, 'नरो नारायणश्चैव हरि कृष्णस्तथैव च' इति धर्मदेवतात्मजत्वेन[2] स्मर्य-माणेषु भगवदवतारेषु तृतीय इति सम्प्रदाय, गजेन्द्रमोक्षकश्चैव ।

"ग्राहग्रस्ते गजेन्द्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन्
व्याघूर्णन् माल्यभूषावसनपरिकरो मेघगम्भीरघोष ।
आबिभ्राणो रथाङ्ग शरमसिमभय शङ्खचापौ सखेटौ
हस्तै कौमोदकीमप्यवतु हरिरसावंहसा सहतेर्न" ॥

स खलु तमोमयग्राहग्रस्तस्वाश्रितगजेन्द्रमोचक सुषुप्तिरूपस्वेतरदुर्निवार-तमोग्राहग्रस्तजन्तुजालमोचकत्वेनानुसन्धीयते । तमधिकृत्यैव पौराणिकोप-जप्य 'प्रात स्मरामि' इत्यादिश्लोकत्रय प्रभाते सर्वै पठ्यते । तत्फल-श्रुतौ च हरिरित्येव भगवान्निर्दिष्ट—

[1] नित्यकर्मसग्रहे—क, ख, ग, च, झ
[2] धर्मदेवतात्मकत्वेन—क, झ

"श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत् ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः" ॥ इति ।

[1]पाप-तद्विपाकरूपं सर्वमनिष्टं हरतीति[2] हरिशब्दः ।

"ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च ।
प्रसह्य हरते यस्मात् तस्माद्धरिरितीर्यते" ॥

इत्यादिभिस्तस्यैव निखिलजगदुदय-विभव-लयलीलस्य निरङ्कुशस्वातन्त्र्यं चानुसन्धेयम् ।

निर्वेदानुसन्धानम् ।

एवमुत्थाय निद्रान्ताचमनं मुख्यं दक्षिणश्रवणस्पर्शरूपं वा तदानीं शक्यं विधाय तस्मिन्नेव शयने समासीनः प्रतिसंहितयोगो योगशास्त्रोक्ते यतमानव्यतिरेकैकेन्द्रियवशीकाराख्ये क्रमभाविनि सञ्ज्ञाचतुष्टये द्वितीयावस्थारूपव्यतिरेकसञ्ज्ञान्यायेन भूतभाविदशाविशेषपरामर्शाय कृताकृतप्रत्यवेक्षणाय च नियतेन्द्रियः समाहितोऽतिक्रान्तमनन्तं कालं निरर्थकमवलोक्य निर्वेदं परं गच्छेत् । निर्वेदप्रकाराश्च विविधास्तत्तत्संहिताविशेषेष्वनुसन्धेयाः । तदिदं सगृहीतं नारायणमुनिभिः —

"ब्राह्मे मुहूर्ते सत्त्वस्थो हरिर्हरिरिति ब्रुवन् ।
उत्थाय शयने तत्र समासीनः समाहितः ।
व्यर्थं वीक्ष्य गतं कालं निर्विद्याहमिति परम्" ॥ इति ।

विस्तरेणोद्धृतं चैतद्वङ्गिवंशेश्वरैः —

"ब्राह्मे मुहूर्ते संप्राप्ते निद्रां त्यक्त्वा प्रसन्नधीः ।
हरिर्हरिर्हरिरिति व्याहरेद्वैष्णवः पुमान् ॥

[1] पाप तद्विकाररूप—क, पाप तद्विपाकरूप—ङ, च, ञ
[2] हरतीत्यत्र—क, ख, ग, घ, च, ञ

उत्थाय शयने तस्मिन्नासीनो नियतेन्द्रियः ।
त्रस्तनिर्विण्णहृदयो व्यर्थं वीक्ष्य गतं वयः'' ॥

इत्यादिभिः, ''दुस्तरा दुर्दशामेता कथयिष्यामि कस्य वा'' इत्यन्तैरधिकविंशैः श्लोकैः । यद्यपि मुमुक्षोः 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति प्राथमिकगुरूपसत्तिकालात् पूर्वमेव तृणीकृतहिरण्यगर्भादिभोगः परिपूर्णो निर्वेदः संवृत्तः, तथापि विषमविपाकविशेषगुणत्रयाश्रयभूतप्रकृतिसंबद्धतया सम्भावितविषयसंगादिदोषपरिहाराय तथाविध एव निर्वेदोऽनुवर्तनीयः । अगीयत चास्य नित्यानुवर्तनीयत्वममानित्वादिगुणगणमध्ये—''जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्'' इति । अतः सिद्धोपायस्यापि पराङ्कुश-परकालादीनामिव भगवदनुभवविच्छेदकतया हेयतमरजस्तमोमयनिद्रादिप्रतिकूलवर्गप्रवाहानुवृत्तिदर्शनेन संसारवैराग्योपचयार्थम् अहरहस्तदुचितावसरेषु निर्वेदः कर्तव्य एव ।

सात्त्विकधृत्यवलम्बनम् ।

एवं सति विवेकविमोकादिसप्तकान्यतमभूतानवसादविरुद्धावसादवशादुत्तरकैङ्कर्यप्रवृत्तेरनिष्पत्तिः स्यादिति तत्परिहारायानन्तरमुच्यते—

''इति निर्विद्य तदनु धृतिमालम्ब्य सात्त्विकीम् ।
विधूय चेमं निर्वेदं सर्वकार्यावसादकम्'' ॥

इत्यादिना गतजलसेतुबन्धनाभिलाषतुल्यानुतापप्रशमनपूर्वकं सात्त्विकधृत्यवलम्बनात्मकागामिकालशक्यकैङ्कर्यनिश्चयः । सात्त्विकधृतिस्वरूपं चैव[1] भगवता गीतम्—

[1] चेद्—क, ख, ग, ङ, च, छ, झ

"धृत्या यया धारयते मन प्राणेन्द्रियक्रिया ।
योगेनाव्यभिचारिण्या धृति सा पार्थ सात्त्विकी" ॥ इति ।

**सात्त्विकधृतिप्रकार ।**

स च निश्चयप्रकार एवं तत्कालोचितकर्तव्यविभागेन सगृहीत —

"इत ऊर्ध्वमह तावद्यावज्जीव श्रिय श्रिय ।
पदयोरर्चन कर्तु यतमान समाहित ॥
अभिगच्छन् हरि प्रात पश्चाद्द्रव्याणि चार्जयन् ।
अर्चयश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥
ध्यायन्नपि परं देवं कालेष्वन्येषु पञ्चसु ।
वर्तमान सदा चैव पाञ्चकालिकवर्त्मना ॥
स्वार्जितैर्गन्धपुष्पाद्यै शुभै शक्त्यनुरूपत ।
आराधयन् हरि भक्त्या गमयिष्यामि वासरान्" ॥ इति ।

अत्र इत ऊर्ध्वम्' 'यावज्जीवम्' 'सदा' इत्यादय शब्दा कैङ्कर्यप्रारम्भदिवसे तावत स्वरसवाहिन । उत्तरोत्तरदिवसेष्वपि निरुपाधिककैङ्कर्योपचयसिद्ध्यर्थं निर्वेदविषयतयानुवर्तमानाना भगवदासक्तिविरोधिनामान्तराणाम्, अष्टादशचण्डाल-षड्वृषलादिशब्दव्यपदेश्याना दोषविशेषाणा नि शेषनिवृत्तिलक्षणवैशिष्ट्यलाभार्थं प्राज्ञप्रज्ञापहारकप्रबलतर[1]विषयेन्द्रियादिमूलसभावितपाक्षिक[2]कैङ्कर्यविच्छेदपरिहारार्थं चेदप्रथम प्रवर्तमानेनैव[3] मनोरथानुवर्तनं कार्यमेव । अत एव नारायणमुनिभिरपि —

[1] प्रबलतर—क, ख, ग, च, झ कोशेषु नास्ति
[2] मूलभूतपाक्षिक—घ, ङ, छ
[3] इदप्रथमप्रवर्तनेनैव—क, ख, ग, च, झ, इदप्रथम प्रवर्तमानेनैव तथैव—घ

"भगवच्चरणाम्भोजपरिचर्याविधिक्रमम् ।
परमैकान्तिभिरनुष्ठेय नित्यं समभिदध्महे" ॥

इति नित्यकर्तव्यं प्रक्रम्य उक्तम्—

'व्यर्थं वीक्ष्य गतं कालं निर्विद्याहमितः परम् ।
आराधयेय ध्यायेयं भजेयं पुरुषोत्तमम् ॥
कीर्तयेय नमस्येय चिन्तयेयमनारतम् ।
व्रजेय शरणं चेति निश्चित्य मनसा स्वयम् ॥" इति ।

पाञ्चकालिकधर्माणां स्वयंप्रयोजनत्वम् ।

अत्र[1] 'गमयिष्यामि वासरान्' इत्यनेन प्रकृतस्य परमैकान्तिनः प्रकारान्तरेण कालयापनमशक्यमिति अच्छिद्रकैङ्कर्यस्य स्वयम्प्रयोजनत्वं व्यज्यते । तदेव हि कण्ठोक्तं नारायणमुनिभिः—

"किं किं न साध्यं भगवदाराधनपरैर्नरैः ।
वैष्णवानां विशेषेण स्वयमेतत् प्रयोजनम्" ॥ इति ।

यदत्र धर्मार्थचिन्तनं तदुपायभूतकायक्लेशचिन्तनं च स्मर्यते, तत्र कैङ्कर्यरूपो धर्मः, तच्छेषभूतोऽर्थः[2], तयोर्गुरुलघूपायविवेकार्थं कायक्लेशचिन्तनम् । तत्र "न पूर्वाह्ण-मध्यन्दिनापराह्णानफलान् कुर्यात् यथाशक्ति धर्मार्थकामेभ्यः तेषु च धर्मोत्तरः स्यात्" इत्यादिभिर्गौतमाद्युक्त-[3]कामौपायिकप्रवृत्त्यंशोऽपि 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इत्युक्तसत्सन्तानोत्पादनादिमात्रार्थशास्त्रीयकामविषयतया गृहस्थस्य कैङ्कर्यपक्षे निक्षिप्यते ।

[1] तत्र—क, च, झ
[2] कैङ्कर्यरूपधर्मशेषभूत —घ, ङ, छ
[3] कामोपाधिक—क, ख, ग, झ

तदर्थ[1]मपवर्गाङ्कुरभूतस्वयप्रयोजनस्वामिकैङ्कर्यमहानन्दलाभ 'विघ्नायुतेन गोविन्दे नृणा भक्तिर्निवार्यते' इति कथ भविष्यतीति भयात अनन्तरं प्रतिबन्धकनिवृत्ति प्रार्थ्यते[2]—

**निर्विघ्नकैङ्कर्यसिद्धिप्रार्थनम्।**

"एतत्क्रियाविरोधीनि प्राचीनान्यशुभानि मे ।
कर्माण्यनन्तान्युच्छेद्यान्यनादीन्यशुचीन्यपि ॥
स्वयैव कृपया देवो विनाश्यास्मन्मनोरथान् ।
पूरयत्विति संप्रार्थ्य मन्त्रमेतमुदीरयेत ॥" इति ।

स च प्रार्थनामन्त्र 'त्वय्याराधनकामोऽयम' इत्यादिको यथान्याय देशिकसकाशादधीत्यात्रान्वह प्रयोक्तव्य । एवमेव हि सर्वेषा मन्त्राणा समाधि । विपर्यये हि नैष्फल्य दृष्टादृष्टप्रत्यवायश्च तेषु तेषु शास्त्रेषु पठ्यते —

"यदृच्छया श्रुतो मन्त्रश्छन्नेनाथ छलेन वा ।
पत्रेक्षितो वा व्यर्थ स्यात प्रत्युतानर्थदो भवेत ॥" इति ।

**निर्विघ्नकैङ्कर्यसिद्ध्ये गुरुपरम्पराप्रपत्तिपूर्वकहरिध्यानम्।**

अस्यैव श्लोकस्यान्यत्र 'त जपेद्यद्यनर्थकृत्' इति चतुर्थपादस्य पाठ ।

एवविधनिर्विघ्नकैङ्कर्यसिद्धिरपि,

"सङ्कल्पादेव भगवास्तत्त्वतो भावितात्मनाम ।
वृत्तान्तमखिलं काल संचयत्यमृतेन तु ॥"

[1] यदय—क, ख, ग, ङ
[2] कथ्यते—क, ख, ग, ङ

इति श्रीसात्त्वतादिकथितप्रकारेण भगवत्प्रसादादेव भविष्यतीति तत्सिद्ध्यर्थमपि प्रथमं हरेरेव ध्यानमुच्यते—"इति संप्रार्थ्य तत्सिद्ध्यै संस्मरेत् प्रथमं हरिम्" इत्यादिना ।

अत्र गुरुपरम्पराप्रपत्तिपूर्वकमिदं ध्यानं विवक्षितम् । "गुरून् प्रपद्य प्रथमं तद्गुरूंश्च ततो हरिम्" इति तस्मिन्नवसरे नित्यान्तरोक्ते । उक्तं च श्रीसात्त्वते अपररात्रयोगारम्भे—"गुरून् देवं नमस्कृत्य ह्युपविश्याजिनासने" इत्यादि । सर्वत्र शास्त्रीयकर्मारम्भे भगवत्पर्यन्तगुरुपङ्क्तिप्रपदनं निश्श्रेयसाय भवति । उक्तं च रहस्याम्नायब्राह्मणे—'स चाचार्यवंशो ज्ञेयो भवति । आचार्याणामसावसावित्याभगवत्तः' इति । देव-गुरुभक्तिरेव सर्वतत्त्वप्रकाशकारणमिति कठवल्ल्यां श्रूयते—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति । [1]स्मर्यते चापस्तम्बादिभिः—'देवमिवाचार्यमुपासीत' इत्यादि ।

योगान्तर्गतं ध्यानम् ।

एवं मनोरथसिध्यै गुरूपसत्तिपूर्वकं भगवन्तं प्रपद्य भगवच्छास्त्रतदुपबृंहणनित्यगद्यस्तोत्रादिषु विप्रकीर्णोक्तध्यानं यथावगमं समाहृत्यानुतिष्ठेत् । गुणोपसंहारपादोक्तन्यायेन ध्येयरूपादिषु साधारणमसाधारणं च सर्वं तत्तत्संहितादिविशेषानुसारेणावगन्तव्यम् ।

सप्रणवं व्यूहादिनामसंकीर्तनम् ।

एवं परिपूर्णं भगवन्तमनुसन्धाय ततो वासुदेवादिव्यूहनामचतुष्टयम्, केशवादिव्यूहान्तरनामानि, मत्स्यादिदशावतारनामानि, अन्यान्यप्यधिगतानि पृथग्भूतानि स्तोत्रनिबद्धानि देव्यादिनामानि च प्रहर्षजनकेनोच्चैः शब्देन संकीर्तयेत् । तत्काल-

[1] उक्तं च—क, ख, ग, च, झ

चोदित समुचित भगवन्मन्त्र जपेत् । वेदाभ्यासं च[1] यथाबलमाचरेत् । तत्र वासुदेवादिकल्किपर्यन्तसंकीर्तनं प्रणवपूर्वकमन्त्रात्मक पारमेश्वरे प्रोक्तम्—

"सम्प्रबुद्ध प्रभाते तु उत्थाय शयने स्थित ।
नाम्ना संकीर्तन कुर्यात षोडशाना प्रयत्नत ॥
ओ नमो वासुदेवाय नम सङ्कर्षणाय ते ।
प्रद्युम्नाय नमस्तेऽस्तु अनिरुद्धाय ते नम ॥
क्रमश केशवादीना यावद्दामोदरं द्विज[2] ।
नमो नम केशवाय नमो नारायणाय च ॥
माधवाय नमश्चैव गोविन्दाय नमस्तत ।
विष्णवेऽथ नमस्कुर्या नमस्ते मधुसूदन ॥
नमस्त्रिविक्रमायाथ वामनाय नमस्तत ।
श्रीधराय नमश्चाथ हृषीकेशाय ते नम ॥
नमस्ते पद्मनाभाय नमो दामोदराय च ।
दिव्यानामवताराणा दशानामथ कीर्तनम् ॥
एकशृङ्गादिकाना तु विहितं क्रमश प्रभो ।
नमस्ते मीनरूपाय कमठाय नमस्तत ॥
नमोऽस्त्वादिवराहाय नारसिहाय ते नम ।
नमो वामनरूपाय नमो रामत्रयाय च ॥
कुठारज्याहलास्त्राय नम कृष्णाय वेधसे ।
कल्किन् विष्णो नमस्तेऽस्तु सर्व सप्रणवं द्विज ॥

[1] तत्कालचोदित भगवन्मन्त्र वेदाभ्यास च—क,
कालोचित समुदित भगवन्मन्त्रजपवेदाभ्यास च—ख, ग,
तत्कालचोदित समुचितभगवन्मत्रजप वेदाभ्यास च—घ, च, झ
तत्काले चोदित—ङ, छ.
[2] द्विज —क, ख, ग, च, झ

यथास्थितक्रमेणैव भेदास्त्वेतान्[1] हरेर्विभो ।
नमस्कुर्यात् प्रभाते तु योगान्ते तु दिनक्षय ॥
शब्देनोच्चतरेणैव सहृष्टिजनकेन तु ।
स्तोत्राणि चाथ मन्त्राणि[2] उदीर्यान्यानि वै तत " ॥ इति ।

एव च सगृहीत वङ्गिवशेश्वरै —

" चिकीर्षन्नीप्सित कर्म तन्नामान्यनुकीर्तयेत् ।
चतुर्भिर्वासुदवाद्यैर्नामभि सह सयत ॥
जपेत् द्वादशनामानि केशवादीनि चादरात ।
दशावतारनामानि मत्स्यकूर्मादिकान्यपि ।
जपन्नुत्थाय शयनादर्चयिष्यन् सदा हरिम् " ॥ इति ।

सन्ध्यापूर्वकाल-कर्तव्यक्रम ।

एवमुच्चैस्तरेण[3] शृण्वतामपि सकलदुरितहारिणा[4] हरिसकीर्तनेन सहृष्टमानस सन्ध्यायामासन्नायाम् सन्धातृत्वेन सर्वेषा सन्ध्येति परिकीर्तित भगवन्तमुपासितु जिगमिषु ,

" हरि हरि ब्रुवस्तल्पादुत्थाय भुवि विन्यसेत्[5] ।
नम क्षितिधरायोक्त्वा वाम पाद महामने " ॥

इति पारमेश्वरादिपठितेन नम पूर्वेण क्षितिधरलिङ्गेन मन्त्रेण महावराह

[1] भेदास्त्वेते—ड, छ

[2] मन्त्राणि इति नपुसकान्तत्वेनैव सर्वेषु कोशेषु दृश्यते

[3] उच्चैस्स्वरेण—च

[4] दुष्कृतहारिणा—घ

[5] हरि हरि इति पूर्वार्धस्थाने 'हरि ब्रुवस्तल्पादुत्थाय' इति क, च, झ, कोशेषु दृश्यते

क्षितिधरमनुध्यायन् वामपादं भूमौ विन्यस्येत् । 'ततो भूधरमन्त्रेण वामपादं भुवि' इत्यपि स एव मन्त्र उच्यते । तत्र क्षितिधारणसाम्यात् कूर्मादिरूपान्तरशङ्काव्युदासाय 'श्रीमद्वराहमन्त्रेण न्यस्येद्वामपदं भुवि' इति विशेषशब्देन व्याचख्युः । महावराहमहिष्या भुवः प्रपदनं चात्र महाभारतादिषु समन्त्रकमुपदिश्यते—'नमोऽस्तु प्रियदत्तायै तुभ्यं देवि वसुन्धरे ।' इति । पृथिव्याः प्रियदत्तेति कीर्तनं च विष्णोः ब्रह्मण्यदेवेति कीर्तनवत् अनवसादहेतुत्वेन स्मर्यते ।

"पृथिवीं प्रियदत्तेति गायन् सर्वसहेति वै ।
विष्णुं ब्रह्मण्यदेवेति[1] कीर्तयन्नावसीदति ॥" इति ।

ततः पदक्रमान् कुर्वन् विष्णुक्रमणमन्त्रेण पादेन्द्रियाधिदैवतं त्रिविक्रमं विष्णुं ध्यायेत् । 'क्रान्ते विष्णुं बले हरिम्' इति पदविक्षेपे विष्णोरनुध्येयतोक्तेः तदनुसन्धानस्य च तत्तदुचितशास्त्रीयप्रकाशकसापेक्षत्वात् । इति सन्ध्यापूर्वकालकर्तव्यक्रमः ॥

ततः स्नानीयदर्भतिलवस्त्रादिकं दृष्टादृष्टार्थं स्नानोपकरणं सर्वं समाहृत्य तमस्तिरोहितदुष्टजन्तुपलायनार्थं निर्गममार्गं सञ्चालयेत् । यथोक्तं पारमेश्वरे—'बहिर्निर्गममार्गं तु सञ्चाल्य' इत्यादि ।

**स्नानाय निर्गमनं केशवध्यानं च ।**

ततो गृहान्निर्गच्छन् केशवमनुध्यायेत् । 'व्रजंश्चिन्तयेत् केशवम्' इति स्मरणात् । केशवशब्देन 'अंशवो ये प्रकाशन्ते', 'यदादित्यगतं तेजः' इत्याद्युक्ताशवः उच्यन्ते, तद्वत्त्वात् केशवः । गच्छतो मार्गादिप्रकाशनार्थं दिङ्मोहाद्यान्तरतमोनिरासार्थम्,

"क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान्" ॥

[1] कीर्तनवत् इत्यारभ्य ब्रह्मण्यदेवेति इति यावत् क, ख, ग, झ कोशेषु विमुक्तम् ।

इति ब्रह्म-रुद्रोपलक्षितविश्वसृष्टिरक्षाहेतुत्वात्, केशिवधोपलक्षितसर्वदुष्टदमन-स्वभावत्वाच्च असहायदशासाहाय्यार्थं[1] तदा तच्चिन्तनम्।

ततः स्वाश्रमादिभ्यो बहिः नैर्ऋत्या दिशि द्वित्रेषुपातप्रमितां भुवमतिक्रम्य, शुद्धदेशे निक्षिप्तस्नानोपकरणो यथोक्तनियमैर्विण्मूत्रविसर्जनं कृत्वा, स्ववर्णाश्रमावस्थाद्यनुगुणादृष्टार्थमृत्सङ्ख्यावर्ण-परिमाणादिनियमवद्गन्धलेपक्षयकरम् अर्शःपीडादिरहितं शौचं कुर्यात्। अत्र मूत्र-पुरीषयोरेकस्य प्रवृत्तौ तस्यैव शुद्धिः। क्रमेणोभयप्रवृत्तौ यथाक्रमम्। युगपत्प्रवृत्तौ पुरीषशुद्धिः प्रथममिति निष्कर्षः[2]।

**विण्मूत्रविसर्जनशौचविधिश्च।**

तत्र पाद्मे[3]—'उपवीतं कर्णदेशे निधाय च तृणादिना' इत्यादिना विण्मूत्रविसर्जनप्रकारमुक्त्वा [4]अनन्तरमेव शौचविधिरुक्तः।

"दक्षिणेतरहस्तेन गृहीत्वा मेहनं ततः।
दक्षिणे मृत्तिकां हस्ते समुत्थाय जलाशयम्॥
प्रागुदीच्यामुदीच्यां वा गत्वा शौचं समाचरेत्।
मृत्तिकाभिर्द्वादशभिर्गुदं षड्भिश्च मेहनम्॥
अन्तरा चान्तरा वामं करं प्रक्षाल्य वारिभिः।
तन्मात्राभिस्तदन्ते द्वौ करौ द्वादशसङ्ख्यया॥
संशोध्य च करौ जङ्घे कटिं चोरू च वारिभिः।
प्रत्येकं मृत्तिकामात्राचतुष्केण विशोधयेत्"॥ इति।

[1] साहाय्यार्थं च इति चेत् सम्यक्
[2] निष्कर्षका—घ, ङ, छ
[3] तत्रैव पाद्मे—क, ख, ग, च, झ
[4] अनन्तरमेव—क, च, झ.

पितामहस्तु सनत्कुमाराय एवमाह—

“ततः पूर्वं समुत्थाय प्राचीमेवोपनिष्क्रमेत् ।
उदीचीं प्रागुदीचीं वा शौचाचारक्षमां दिशम् ॥
यत्रोदकं प्रभूतं तु तद्गत्वा शौचमाचरेत्” ॥ इति ।

स्मरन्ति च देशादिभिन्नं शौचम्—

“देशं कालं तथा ज्ञानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत्” ॥ इति ।

दिवसादिभेदेनापि शौचतारतम्यं स्मर्यते—

“अह्नि यच्छौचमुद्दिष्टं निश्यर्धं तु ततो भवेत् ।
पथि पादस्ततः प्रोक्तो यथाशक्त्यातुरस्य तु ॥” इति ।

पारमेश्वरे तु प्रावृडादिकालभेदेनापि मृत्सङ्ख्याभेदादिकमुक्तम् ।

“अस्पृष्टतीर्थं शौचार्थ[1]मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥
तिस्रो लिङ्गे मृदो देया एकैकान्तरमृत्तिका ।
पञ्च वामकरे देयास्तिस्रः पाण्योर्विशुद्धये ॥
मूत्रोत्सर्गे शुद्धिरेषा पुरीषस्याप्यनन्तरम् ।
अर्धप्रसृतिमात्रं तु प्रथमा मृत्तिका स्मृता ॥
द्वितीया च तृतीया च तदर्धं[2] परिकीर्तिता ।
बिडालपदमात्रं तु तदूर्ध्वं परिकीर्तिता ॥

[1] शौचाद्य—घ, ङ, छ, शौचार्थ—क, ख, ग, ञ
[2] तदर्धा—ख, ग, घ, ङ, छ.

पञ्चापाने मृत्तिका स्युस्तथैवान्तरमृत्तिका· ।
दश वामकरे देयाः सप्त तूभयहस्तयो ॥
पादाभ्या तिसृभि शुद्धिर्जवाशुद्धिश्च पञ्चभि ।
नियोजयेत्ततो विप्र[1] कट्या वै सप्त मृत्तिका ॥
स्वदेहस्वेददोषघ्ना बाह्यकर्दमशान्तये ।
भक्ताना श्रोत्रियाणा च वर्षास्वेव निरूपितम् ॥
प्रावृड्डुक्तात्तु वै तस्मादेकमृद्द्व्यपनोदनम् ।
शरद्ग्रीष्मवसन्तेषु नित्य कार्यं क्रियापरै ॥
[2]ग्तस्मादपि चैकैका परिलुप्या[3] तु मृत्तिका ।
हेमन्तशिशिरे विप्रैः[4] श्रोत्रियै सयमस्थितै ॥
पथि शौच प्रकर्तव्य देशकालानुरूपत ।
गन्धलेपमपास्यैवं[5] मन शुध्या विशुध्यति ॥
विहिता पादशौचे तु बिडालपदसमिता ।
मृदश्चतुर्द्विजेन्द्राणा त्रिर्द्विरेका क्रमात्तत ॥
वर्णाना शूद्रनिष्ठाना कटिशौचे तथैव हि ।
सप्त सप्त उभाभ्या तु कराभ्या त्रितय पुन ॥
सर्वेषामेव सामान्य पाणिशौचमुदाहृतम् ।
अन्तर्जानुगत कृत्वा भुजयुग्म द्विजोत्तम ॥
चतुर्धा मणिबन्धस्थ तोय कृत्वा सुनिर्मलम् ।

[1] विप्र—घ, ड, छ
[2] एकस्मात्—क, ख, ग, च, झ
[3] परिपाल्या—घ कोशादन्यत्र
[4] विप्र—घ, ड, छ
[5] अपास्यैव—क, ख, ग, च, झ

बुद्बुदाद्यैर्विनिर्मुक्तं पिबेद्विप्रो हृदा तत ॥
एकैका ह्रासयेन्मात्रा वर्णत्रयमनुक्रमात् ।
पाणिना क्षालितेनैव पुनराचामयेद्बुध ॥" इति ।

आचमनप्रकाराश्च बहुधा धर्मशास्त्रेषु भगवच्छास्त्रेषु च प्रतिपादिता । तत्र स्वसूत्रोक्तमन्यद्वा यथाशक्त्यधिगम[1]माचमन कुर्यात । आचमनोक्त्यनन्तरं च पारमेश्वरे दन्तधावन-मुखशोधनप्रकार उक्त —

**आचमन दन्तधावन च ।**

"एव प्रक्षाल्य विधिवदाचम्य प्रयत शुचि ।
प्राङ्मुखोदङ्मुखो वापि उपविश्यासने तत ॥
अर्कादिभिरपामार्गै कारयेद्दन्तधावनम् ।
प्रातर्हत्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥
भक्षयेद्दन्तकाष्ठं च दन्तमासान्यबाधयन् ।
द्वादशाङ्गुलमात्रं तु वक्रग्रन्थिविवर्जितम् ॥
पयोभि सह तर्जन्या ब्रह्मन् द्वादशसख्यया ।
काष्ठालाभे तु रोगे वा कर्तव्यं दन्तधावनम् ॥
षोडशाङ्गुलदीर्घैस्तु वक्रग्रन्थिविवर्जितै ।
हेमादिनिर्मितैर्वापि कुशदर्भादिभिस्तथा ॥
जिह्वानिर्लेखन चैव गण्डूषमुखधावनम् ।
कुर्यादाचमनं विप्र[2] शुचिना[3] सलिलेन च" ॥ इति ।

[1] यथाधिगम—क, ख, ग, च, झ
[2] विप्र—घ
[3] शुद्धेन—घ, ङ, छ

अत्र अर्कादिभिरित्युक्त तत्रैव विवृतम्—

“ अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ।
शरजोदुम्बराश्वत्थप्लक्षदर्भाश्च वैणवान् ॥
आम्राङ्कुरमपामार्गमर्जुन धातकी शमी[1] ।
अन्यानि च पवित्राणि तेषु सम्पन्नमाहरेत्” ॥ इति ।

अत्राभक्षणीयस्यापि काष्ठस्य भक्षणोक्ति भक्षणवदाद्यन्ताचमनादिप्राप्त्यर्था । पाद्मेऽप्येव दन्तधावनमुक्तम्—

“ आचम्य प्राङ्मुखो भूत्वा दन्तधावनमाचरेत् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षाम्रार्जुनधातकी ॥
पलाशवेणुखदिरशमीदारूणि धावने ।
दन्तानामुदितान्येकादश चाम्भोरुहासन ॥
दन्तधावनकाष्ठं च द्वादशाङ्गुलमायतम् ।
दशाङ्गुल तथा मानमष्टाङ्गुलमथायतम् ।
ब्राह्मणक्षत्रियविशा क्रमेणैतदुदाहृतम्” ॥ इति ।

अत्र सर्वत्र प्रतिषिद्धाना[2] वर्जनं सर्वत्र विहितानां[3]मुपादानं च, क्वचिद्विहिताना क्वचिच्च प्रतिषिद्धाना गत्यभावे ग्रहणमिति निष्कर्ष । एव सर्वत्र भाव्यम् ।

यथोक्तलक्षण च दन्तकाष्ठं समन्त्रक गृहीत्वा ‘आयुर्बलम्’ इत्यादिस्मार्तमन्त्रपूर्वक प्रादक्षिण्येन प्रथममधरतो दन्तधावन कुर्यात् । काष्ठाला-

[1] धातकी शमी इति पदद्वयमपि प्रथमान्तत्वेनैव सर्वेषु कोशेषु दृश्यते

[2] सर्वप्रतिषिद्धाना—घ ङ, छ

[3] सर्वविहिताना—घ, ङ, छ

भादिदशासु तत्तत्तरुपर्णैस्तृणैर्वा तेषामप्यभावे द्वादशगण्डूषैर्मुखशुद्धि । उक्त चैव नारायणमुनिभि·—

"तीर्थं सशोध्य सक्षाल्य पादावाचम्य वाग्यत ।
तृणैर्वा शास्त्रससिद्धैर्वटार्कखदिरादिभि· ।
दन्तान्.सशोध्य निर्लिख्य जिह्वा गण्डूषयेन्मुहु " ॥ इति ।

स्मरन्ति च—

"अलाभे दन्तकाष्ठाना प्रतिषिद्धदिनेष्वपि ।
अपा द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति" ॥ इति ।

अत्र—

"प्रतिपत्पर्वषष्ठीषु चतुर्दश्यष्टमीषु च ।
दन्ताना काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
अष्टम्या च चतुर्दश्या पञ्चदश्या त्रिजन्मसु ।
तैल मास व्यवाय च दन्तकाष्ठ च वर्जयेत्" ॥

इत्यादिभि प्रतिषिद्धदिनानि ग्राह्याणि । दन्तशुद्ध्यनन्तर दन्तकाष्ठ क्षालयित्वा भङ्क्त्वा शुद्धस्थले प्रक्षिपेत् ।

स्नानार्हतीर्थम् ।

तत्र यच्छुद्धे पूर्व जलाशयगमनमुक्त तत्र भागवत भागवताश्रित च तीर्थं विवक्षितम् । यथाहु —"तीर्थं भागवत शुद्धमुपगच्छेन्मनोहरम्" इति । "ततस्तीर्थं समाश्रित्य शुद्ध भागवताश्रितम्" इति च । स्मरन्ति च—

"जल शुद्धमशुद्धं वा विष्णुवास्तुसमीपत· ।
विष्णुगङ्गासम तीर्थं महापातकनाशनम् ॥

भवद्विधा भागवतास्तीर्थभूता स्वय प्रभो[1] ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता ॥
ये भजन्ति जगद्योनि वासुदेवमनीश्वरम् ।
न तेभ्यो विद्यन तीर्थमधिक राजसत्तम ॥
यत्र भागवताः स्नानं कुर्वन्ति विमलाशया ।
तत्तीर्थमधिक विद्धि सर्वपापप्रणाशनम्'' ॥ इति ।

स्नानविधि ।

एव गृहीतस्नानोपकरणस्तीर्थमासाद्य मुखशोधनपर्यन्तं कृत्वा वक्ष्यमाणक्रमेण तीर्थावगाहनादिपूर्वक सर्वक्रियामूलभूत स्नानमाचरेत । प्रात स्नानस्य नित्यत्व प्रभावश्च तत्र तत्र द्रष्टव्य । तत्र[2] वर्णभेदेन स्नाननियम स्मरन्ति पितामहादय —

''अपोऽवगाहन स्नान विहित सार्ववर्णिकम् ।
मन्त्रवत्प्रोक्षण चापि द्विजातीना विशिष्यते'' ॥ इति ।

तत्र शक्तस्य वारुणमेव स्नानम् । तदशक्तस्य तु--

गौणस्नानानि ।

''न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न चान्यवस्त्रमाच्छाद्य नाविज्ञाते जलाशये'' ॥

इत्यादिभिस्तत्प्रतिषेधात् स्नानान्तराणि भवन्ति । तेषु च वारुणानन्तरमाकण्ठस्नानम् । 'अशक्तावशिरस्क वा' इति स्मरणात् । तत्राप्यशक्तस्य[3] कापिलम् । तस्मिन्नप्यशक्तस्य तत्तच्छास्त्रोदितेषु पार्थिवाग्नेय-वायव्य-दिव्य-

[1] विभो—घ
[2] अत्र—घ , तत्र तत्र—क, ख, ग, च, झ
[3] असमर्थस्य—घ

मान्त्र-मानसात्मध्यान पञ्चाङ्ग-पुरुषान्तरकृतस्पर्शपूर्वकावगाहनरूपेषु स्नानान्तरेषु तत्कालसंभावितम् । तत्रापि स्वशक्त्य कुर्यात । आह चैव क्रतु.—

" प्राक्शौच स्नानमादेय ब्राह्म वा स्नानमिष्यते ।
वृद्धातुरणामुष्णाद्भिर्योगाङ्गैर्वा यमादिभि " ॥ इति ।

अत्र यथाधिकारमिति विवक्षा । एव चोक्त पारमेश्वरे—

" विना विविधसम्पर्कै पञ्चाङ्ग स्नानमाचरेत् ।
मुख करद्वयोपेत पादौ कटितटावधि ।
स्त्रीसगाद्युपघातेपु स्नान कुर्याद्यथाविधि " ॥ इति ।

शीतोदकस्नानासमर्थस्य उष्णोदकस्नानम् । तच्चानुपहतस्याप्रतिषिद्धेषु दिवसेष्वेव । एव शक्त्याद्यनुगुणं स्नान कुर्यात् । बलानुरूप च स्नान प्रत्येक समुदित वा मजगृहु —

" दिव्याप्यमान्त्रवायव्यभौमतैजसमानसै ।
एतै समस्तैर्व्यस्तैर्वा कृतशुद्धिर्यथाबलम् ॥ " इति ।

अन्यथा त्वकर्मण्यो भवति । ' स्नानमूला क्रियाः सर्वा ' इति विधानात् । अत्रिश्च स्नान-जप-होम-दानाना नित्यत्वमाह—

" अस्नाताशी मलं भुङ्क्ते अजप पूयशोणितम् ।
अहुताग्नि कृमि भुङ्क्ते अदाता कीटमश्नुते " इति ।

[1] पार्थिववायव्यमान्त्र—क, झ
[2] स्पृष्टिपूर्वक—घ, ङ, छ

एवं स्नात कृतोर्ध्वपुण्ड्र स्नानाङ्गं भगवदात्मकदेवर्षिपितृतर्पणं कृत्वा

**सन्ध्योपासनम् अर्घ्यदानं च ।**

आचम्य, मन्त्रप्रोक्षण-मन्त्राचमन-पुन प्रोक्षण-स्वात्म परिषेचनानि स्वसूत्रसहितोक्तप्रकारेण कृत्वा,[1] गायत्र्याभिमन्त्रितजलमादित्यान्त स्थिताय परमात्मनेऽर्घ्यरूप दद्यात् । अत्र जलाञ्जलिप्रक्षेपस्त्रिरिति सनत्कुमाराय पितामह प्राह—

"उभाभ्या तोयमादाय हस्ताभ्या सुसमाहित ।
गायत्र्या चाभिमन्त्र्यापस्तारव्याहृतिपूर्वया ।
रवेरभिमुखस्तिष्ठन्नूर्ध्वं त्रि सन्ध्ययो क्षिपेत्" ॥ इति ।

ततो वज्रीभूततज्जलनिहतमन्देहाख्यरक्षोनिरसनपाप्मावधूननार्थं प्रदक्षिण प्रक्रम्य,[2] मार्गशीर्षादिमासेशान् केशवादीन्[3] तत्तन्मन्त्रेण तर्पयित्वा,

**प्राणायाम-गायत्री-जपौ ।**

"सव्याहृति सप्रणवा गायत्री शिरसा सह ।
त्रि पठेदायतप्राण प्राणायाम स उच्यते" ॥

इत्युक्तप्रकारेण प्राणायामत्रय कृत्वा,[4] गायत्रीमावाह्य, अष्टोत्तरसहस्रमष्टोत्तर-शतं यथाशक्ति दशवारा वा[5] गायत्री जपेत् ।

[1] कृत्वा—इति पद घ कोशादन्यत्र विमुक्तम्

[2] परिक्रम्य—क, च, झ

[3] केशवादीन् इति पद घ कोश एव विद्यते

[4] इत्युक्तप्रकारेण दशवार प्राणायामत्रय वा कृत्वा—च, झ

[5] अष्टोत्तरसहस्रमष्टोत्तरशत यथाशक्ति दशवारा गायत्री—क, ङ, च, छ, झ, अष्टोत्तरसहस्रमष्टोत्तरशत यथाशक्ति गायत्री—ख, अष्टोत्तरसहस्रमष्टोत्तरशत वा गायत्री—ग, अष्टोत्तरसहस्रमष्टोत्तरशत यथाशक्ति दशावर वा गायत्री—घ, अष्टोत्तरसहस्रमष्टोत्तरशत वा यथाशक्ति गायत्रीं—इति निक्षेपचिन्तामणौ

"न च क्रमन्न च हमन्न पार्श्वमवलोकयन् ।
न पदा पादमाक्रम्य न चैव हि तथा करौ" ॥

इत्यादयश्च जपकालनियमा ।

**अष्टाक्षरजप ।**

' मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणा ।
मद्याजिनो मन्नियमास्तान् प्रयत्नेन पूजयेत ॥
तेषा तु पावनायाह नित्यमेव युधिष्ठिर ।
उभे सन्ध्येऽधितिष्ठामि ह्यस्कन्नं तद्व्रत मम ॥
तस्मादष्टाक्षर मन्त्र[1] मद्भक्तैर्वीतकल्मषै ।
सन्ध्याकालेषु जप्तव्य सतत चात्मशुद्धये" ॥

इति श्रीवैष्णवधर्मशास्त्रोक्तश्रीमदष्टाक्षरजपोऽपि यथाशक्ति सन्ध्यायामवसरे कार्य[2] । प्राणायामेन शतकृत्व प्रणव-व्याहृतिसभेदविशेषेण दशकृत्वो गायत्रीजपं सहस्रतुल्य बोधायनादय स्मरन्ति । एवमेकपादस्थित्यासनविशेष-स्वगृह-तटाकाश्वत्थमूल-देवायतनादिस्थानभेदेषु च फलतारतम्य स्मर्यते । तत्रैषा काष्ठा—'अनन्त विष्णुसन्निधौ' इति । गणनाया च कराक्ष-सूत्रयोर्यथाशक्ति विकल्पत करणत्वम् । उक्त च जयाख्यसहितायाम् 'जप तु द्विविधं कुर्यादक्षसूत्रकरार्पितम्' इति । अक्षसूत्रार्पित करार्पित वेत्यर्थ । तदेव विशेषित श्रीसात्त्वते—'स्फाटिकेनाक्षसूत्रेण स्वकैर्वा करपर्वभि·' इति । अत्र स्फाटिकेनेत्यक्षमालावर्गोदाहरणम् । शास्त्रान्तरेषु पद्माक्षमाला-दीनामाधिक्यस्मरणात् । फलविशेषार्थं तु मणिमुक्तामयाद्यक्षमालाभेदा ।

[1] अत्र च मन्त्रशब्द सर्वेषु कोशेषु च नपुसकान्तत्वेन दृश्यते

[2] सन्ध्यायामेव कार्य इति च-कोशे पाठान्तरतया निर्दिष्टम्.

प्रतिष्ठाविशेषादिनियमाश्च तत्र तत्र प्रपच्यन्ते । करेऽपि शङ्ख-पद्ममुद्रादिभेदाश्च[1] । तत्रैष सार —

"कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण तु ।
अनामिकान्त देवेश[2] जपेत् कोटिसहस्रकम्" ॥ इति ।

बोधायनीये तु श्रीमदष्टाक्षरविधावेवमुक्तम्— '

' क्रियायागाद्दशगुणो जपयज्ञ प्रकीर्तित· ।
उच्चाच्छतगुणो ज्ञेय उपांशुश्चेत् स्मृतस्तदा ।
उपांशोर्मानिस प्रोक्त सहस्रगुणतोऽधिक " ॥ इति ।

अन्यदपि तत्रोक्तम्—

"जपमध्ये गुरुर्वापि वैष्णवो य समागत ।
सभाषणादिपूजा तु तस्य कृत्वानुमान्य च ।
अनुश्राव्य तत कृत्वा जपशेष समाहित ॥
सर्वस्य प्रभवो यस्माद्विष्णुपादश्रया नरा ।
तन्मूलतः क्रिया सर्वा सफलास्तु भवन्ति हि" ॥ इति ।

नारदीये श्रीमदष्टाक्षरब्रह्मविद्यायाम्—

"सर्व सप्रणवो जप्यो जपादप्रणवादपि ।
सहस्र इति विज्ञेय प्रणवो ह्यक्षर परम् ॥
असंख्याताच्च सख्यात सहस्रगुण उच्यते ।
सख्यातादपि साहस्र सोर्ध्वपुण्ड्रतनोर्जप " ॥

इत्युक्तम् ।

[1] शङ्खपद्ममुद्राश्च—ङ, छ
[2] देवेशि—घ, ङ, छ

एवम्—

“ विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशु स्याच्छतगुणः सहस्रो मानसः स्मृतः ।
उच्चैर्जपादुपांशुः स्याद्विशिष्टो दशभिर्गुणैः ।
जिह्वाजपः शतगुणः सहस्रो मानसः स्मृतः ” ॥

इत्यादिकमपि द्रष्टव्यम् ।

एवमासूर्योदयात् ‘ पूर्वोत्तराशाभिमुखस्त्वपरोत्तरदिङ्मुखः ’ इत्यादिस्मृत्यनुसारेण प्राङ्मुखः प्रागुदङ्मुखो वा तिष्ठन्, गायत्रीमावर्त्य, पूर्ववत् कृतप्राणायामत्रयः, सन्ध्योपस्थानसङ्कल्पपूर्वकम् ‘ उत्तमे शिखरे ’ इति मन्त्रेण गायत्रीमनुज्ञाप्य, स्वसूत्रोक्तैर्मन्त्रैरादित्यमण्डलान्तःस्थितं भगवन्तमुपस्थाय, सप्रदक्षिणं भगवदात्मकसन्ध्यादिपञ्चकनमस्कारं कृत्वा, ‘ स यश्चायं पुरुषे यश्चासावादित्ये स एकः ’ इत्यधीतं हृदयान्तःस्थितं परमात्मानमभिवाद्य प्रणम्य, दिगादि[1]नमस्काराणामपि स्वपूर्वपूर्वोपदेशानुष्ठानपारम्पर्यमस्ति चेत्तत्रापि भगवदात्मकध्यानपूर्वकं प्रणमेत् । एवं तु उपस्थानप्रकारं पितामहः सनत्कुमारायाह—

**सूर्योपस्थानम् ।**

“ एताभिः प्राञ्जलिर्नित्यं विस्पष्टोदितमण्डलम् ।
सहस्ररश्मिं भगवन्तं[2]मुपतिष्ठेद्दिवाकरम् ॥
ततस्तस्मै नमस्कृत्वा सन्ध्याद्याः पञ्च देवताः ।
प्रदक्षिणनमस्कारैर्दिशश्चैवोपतिष्ठते ।
परमात्मानमात्मानं भावयित्वा द्विजोत्तमः[3] ” ॥ इति ।

[1] नमस्कारमपि पूर्वपूर्वोपदेश—क, ख, ग, च, ञ
[2] भर्ग त—च
[3] द्विजोत्तम—ख, ग, घ

आधारशक्त्यादि-तर्पणम् ।

तत आधारशक्त्यादिपारिषदान्तान् देवर्षिपितॄंश्च भगवदात्मकान् ध्यात्वा, प्रणवपूर्वकैस्तत्तन्नामभि सन्तर्प्य, शुचौ [1]देशे स्नानवस्त्रं निष्पीड्य, आचम्य, आवाहिततीर्थं मन्त्रांश्च [2]स्वात्मनि समाहरेत् ।

स्वसूत्ररीत्यैव सन्ध्या अनुष्ठेया ।

तत्र यद्यप्यार्षी वैष्णवी प्राजापत्येति त्रिविधा सन्ध्योपास्तिभेदा[3]-स्तत्तत्संहितासून्यन्ने, तथापि तासां संहितानां लुप्तप्रायत्वेन तत्तत्प्रकाराणां दुर्ज्ञानत्वात् पारमेश्वरपरमसंहितादिषु परिपूर्णदृश्यमान[4]सन्ध्योपासनप्रकारभेदानामपि यथावदुपदेशानुष्ठानपारम्पर्यासिद्धे , भगवच्छास्त्रसंहितास्वेव स्वसूत्रोक्तसंस्काराचारा[5]भ्यनुज्ञानात् प्रथमपरिगृहीतपरित्यागे निर्बन्धाभावात् यथासूत्रमनुष्ठानेऽपि भगवत्समाराधनरूपत्वसिद्धे स्वसूत्रविहितमेव सन्ध्योपास्त्यादिकं[6] कर्तुमुचितम् । उक्तं हि नारदीये--' स्वसूत्रविहितान् वापि निषेकादीन् समाचरेत् ' इत्यादि । पाद्मे च शौचाचमन-दन्तधावन-स्नानानि यथाक्रमं विधायानन्तरमेव सन्ध्योपासनमुक्तम्—

" आचम्य प्रोक्षयेद्दर्भवारिभिर्मन्त्रवत्तनुम् ।
ओपूर्वया च गायत्र्या वारिभिश्चाभिमन्त्रितै ॥
आत्मानं परिषिच्योर्ध्वमुत्क्षिपेत् सलिलाञ्जलिम् ।
योद्धुकामानि रक्षांसि सन्ध्ययोरुभयोरपि ॥

[1] स्थले—घ कोशादन्यत्र
[2] आत्मनि—क, च, झ
[3] त्रिधा सन्ध्योपास्तिविशेषा —घ
[4] परिदृश्यमान—क, ख, ग, च, झ
[5] स्वसूत्रसहिताचार—क, ख, ग, च, झ
[6] सन्ध्योपासनादिकं—क, झ, सन्ध्योपस्थानादिकं—ख, ग, च

शाम्यन्ति तैर्वज्रभूतैर्हतानि प्रेरितैर्जलैः ।
प्रायश्चित्तं तु हिंसाया परिक्रम्य प्रदक्षिणम् ॥
तर्पयेदुपविश्याथ तत्तन्मन्त्रमुदीरयन्[1] ।
देवादीन् सलिले तिष्ठन् सावित्रीं प्राङ्मुखो जपेत् ॥
यावत्सूर्योदयं दृष्ट्वा प्राञ्जलिस्तिमिरापहम् ।
उपस्थाय स्वशाखोक्तैर्मन्त्रैर्ध्येयं हृदि स्थितम् ॥
अभिवाद्य गुरून् वृद्धांस्तथा भागवतान् क्रमात्" । इति ॥

अत एव हि श्रीमद्भट्टारकैरुक्तम्—

"प्रातरुत्थाय सस्मृत्य हरिं तच्चरणोत्थिताम् ।
गङ्गां विभाव्य[2] तीर्थाम्भस्ततस्तदवगाह्य च ॥
श्रुतिस्मृत्युदितं कर्म यावच्छक्ति परात्मनः ।
आराधनत्वेनापाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत्" ॥ इति ।

तद्गुरुभिः श्रीवत्साङ्कमिश्रैरपि वटुकपूर्णाभ्यर्थनया अभिगमनसारमुपदिशद्भिरादावुक्तम्—"प्रातरुत्थाय स्वगुरोश्चरणारविन्दे स्वात्मानं समर्प्य कृतार्थं निर्भरं स्वात्मानमनुसन्धाय, स्नानादिकं स्वकर्म कृत्वा, शुचौ देशे आसीनः" इत्यादि । वङ्गिवंशेश्वरैश्च—

"धृतोर्ध्वपुण्ड्रो देवर्षिपितॄन् सन्तर्प्य मन्त्रतः ।
प्रयतः परया[3] भक्त्या स्वकर्माराध्यमच्युतम् ॥

[1] उदीरयेत्—ख, घ, ट, छ

[2] विगाह्य—क, च

[3] प्रपन्नः परया—क, च, झ, प्रपत्तिपरया—ख, ग, ड, छ, प्रपत्तिफलया—घ, प्रयतः परया इति वङ्गीशकारिकापाठः

आदित्यमण्डलान्तस्थ प्रणम्य मनसा स्मरन् ।
सन्धातृत्वेन सर्वेषा सन्ध्येति परिकीर्तितम् ॥
श्रुतिस्मृत्युदित कर्म[1] स्ववर्णस्वाश्रमोचितम् ।
फलाभिसन्धिरहित परब्रह्मार्चनात्मकम् ॥
न्यस्य कर्तृत्वभोक्तृत्वे स्वामित्वं च परात्मनि ।
नित्यनैमित्तिकै काम्यै कर्मभिश्च समन्वित ॥
गायत्रीजपपर्यन्तं मन्त्राचमनपूर्वकम् ।
सान्ध्य कर्माखिल साधु समाप्य च यथाविधि ॥
तत स्वकर्मभोक्तारमादित्यान्तरवस्थितम् ।
उपस्थाय स्वकैर्मन्त्रैर्नारायणमतन्द्रित " ॥

इत्यादि ।

**सन्ध्यार्घ्ये भगवद-र्घ्यत्वभावनम् ।**

अत्र गायत्र्यभिमन्त्रितजलाञ्जलिप्रक्षेपे भगवदर्घ्यरूपत्वमपि भावनीयतया सगृहीत नारायणमुनिभि —

"आपो हीत्यादिभिर्मन्त्रैर्वाचकै परमात्मन ।
सप्रोक्ष्य मन्त्राचमन मन्त्रैस्तत्प्रतिपादकै ॥
आदित्यान्तस्थितस्यार्घ्य वितीर्य परमात्मन ।
प्रतिपादिकया विष्णो सावित्र्या त जपेद्धरिम् ॥
ध्यायन् जप्त्वोपतिष्ठेत तमेव पुरुषोत्तमम् ।
नारायणात्मकान् देवानृषीन् सन्तर्पयेत् पितॄन् ॥

[1] श्रुतिस्मृत्युदित सम्यक्—घ, श्रुतिस्मृत्युदित सर्व इति कारिकापाठ

तत आधारशक्त्यादीन् सर्वान् पारिषदान्तकान् ।
सपीड्य तीरे तद्वस्त्र पुनराचम्य वाग्यत ।
पाषण्डादिभिरालापदर्शनादीनि वर्जयेत्" ॥ इति ।

यथोपदिष्टसन्ध्यानादरे च दोषं स्मरन्ति—

सन्ध्यानादरे दोष ।

"अनागता तु ये पूर्वामनतीता तु पश्चिमाम् ।
सन्ध्या नोपासते विप्रा कथ ते ब्राह्मणा स्मृता ॥
साय प्रात सदा सन्ध्या ये न विप्रा उपासते ।
काम तान् धार्मिको राजा हीनकर्मसु[1] योजयेत्" ॥ इति ।

स एष सन्ध्याक्रम ।

ब्रह्मयज्ञ ।

अथ ब्रह्मयज्ञ प्रत्यक्षतैत्तिरीयश्रुत्याद्यनुसारेण उदित आदित्ये कुर्यात, माध्यन्दिनानन्तर वा भोजानात् पूर्वमेव[2] यत्र क्वचिदवसरे वा ।

तीर्थासन्नभगवदालयप्रणाम ।

तीर्थस्नानसमनन्तरं महाभारतोक्तप्रकारेण तीर्थासन्नविष्णवायतन च नमस्कुर्यात् । भगवन्मन्दिरप्रवेशदशाया कर्तव्यस्य दिङ्मात्रं दर्शितं श्रीसात्त्वते—

"प्रासादं देवदेवीयमाचार्य पाञ्चरात्रिकम् ।
अश्वत्थ च वट धेनु सत्समूहं गुरोर्गृहम् ॥
दूरात् प्रदक्षिण कुर्यान्निकटात् प्रतिमा विभो ।
दण्डवत्प्रणिपातैस्तु नमस्कुर्याच्चतुर्दिशम् ॥

[1] शूद्रकर्मसु—घ, ङ, छ
[2] माध्यन्दिनानन्तरमेव वा भोजनात् पूर्व वा—क, ख, झ

न यानपादुकारूढो न सोपानत्कपादभृत् ।
न विक्षिप्तमना भूत्वा सविशेद्भगवद्गृहम् ॥ " इति ।

तत्र च प्रदक्षिणानि प्रणामाश्च युग्मान् कुर्यात् । 'एकत्रिपञ्च-सप्तादिगणना विषमं हि यत्' इति विषमप्रतिषेधात् । 'प्रवेशे निर्गमे चैव विष्वक्सेननतिं चरेत्' इति विधानात् विष्वक्सेनं तत्तद्द्वारपालाश्च प्रणम्यानुज्ञाप्य तत्र तत्र प्रविशेत्[1] ।

" चक्रवद्भ्रामयेन्नाङ्गं पृष्ठभागं न दर्शयेत् ।
पश्चाद्भागेन निर्गच्छेद्देवतासन्निधौ सुधीः ॥ " इति ।

प्रणामप्रकाराः ।

प्रविष्टश्चाष्टाङ्गेन तत्तद्देशकालशक्त्येन मस्तिष्क-सम्पुट-प्रह्वाङ्ग-पञ्चाङ्ग-दण्डाङ्गादिषु अन्यतमेन वा प्रणमेत् । तत्राष्टाङ्ग-प्रणामम्—

" मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् " ॥

इति सात्त्वतोक्तमुदाहरिष्यति भाष्यकारः । मस्तिष्कादिपञ्चकं तु श्रीवैखानसशास्त्रे पठितम्—

" स मस्तिष्कप्रणामः स्यादञ्जलिं मस्तके न्यसेत् ।
प्रणामः सम्पुटः स स्याद्धृदयेऽञ्जलिमर्पयेत् ॥
प्रह्वाङ्गं सम्पुटं कुर्यात् सा प्रह्वाङ्गनमस्क्रिया ।
पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनिं स्पृशन् ॥

[1] अनुज्ञाप्य तत्र प्रविशेत्—क, ख, ग, झ

बद्धाञ्जलिर्नमस्कुर्यात् स पञ्चाङ्ग उदाहृत[1]।
पादौ हस्तौ प्रसार्यैव शेते भूमौ च दण्डवत् ॥
स दण्डाङ्गप्रणाम स्यात् प्रणामानेवमाचरेत्" ॥ इति ।

सङ्कर्षणसंहिताया सुकृतप्रणामप्रकरणे त्वेवं प्रणाम उक्त —

"ललाटोदरजान्वङ्घ्रियुगाग्रानूर्ध्वगौ करौ ।
भूमौ सन्धाय मनसा वासुदेवमनुस्मरन्" ॥ इति ।

एवं चाष्टाङ्गप्रणाम स्मर्यते—

"उरसा शिरसा वाचा मनसा च कपोलत. ।
पद्भ्या कराभ्या जानुभ्या प्रणामोऽष्टाङ्ग उच्यते" ॥ इति ।

रहस्याम्नायब्राह्मणे च नमस्कारप्रकरणे 'जानुभ्या पाणिभ्या शिरसा च नन्तव्यं भवति' इत्यादिना पूर्णनमस्कारस्वरूपादिकमुपदिश्य तत्फल चोक्तम्—'सर्वैं करणैर्नमन् समग्रो नमति। समग्रो नमन् आप्तकारी भवति। आप्तकारी भगवन्तमाप्नोति' इति। एव द्वादशाङ्गप्रणामादिकं तत्र तत्र द्रष्टव्यम् । एकहस्तेन नमन तु श्रीभागवते प्रतिषिद्धम्—

"एकेन पाणिना यस्तु प्रणमेत् पुरुषोत्तमम् ।
न्याय्यस्तस्य करछेद इति धर्मविदो विदु ॥" इति ।

अञ्जलित्वमपि ह्यस्य[2] नास्ति। 'तौ युतावञ्जलि· पुमान्' इति नैघण्टुकपाठात् । चामरग्राहिणीप्रभृतीना तु व्यापृतान्यहस्ततया एकहस्त-नमनाभ्यनुज्ञा । अतोऽवज्ञादिमूलैककरनमने करच्छेददण्डानुशासनमिति

[1] उदीर्यते—घ, ङ, छ
[2] अञ्जलित्वमप्यस्य—क, ख, ग, च, झ.

'यथा तथा वापि सकृत् कृतोऽञ्जलि ' इत्यादीनामविरोध [1] । योग्यताया सत्या द्वाभ्या पाणिभ्या प्रणमतोऽपि ऊनत्वमामनन्ति—"यदा ह्यय केवल-पाणिभ्यामेव नमति न जानुभ्या न शिरसा, एकेन ज्ञानेन नमति स्पर्शविशेष[2]ज्ञानेन हीयते । इतराणि ज्ञानानि कर्मण । एकेन नमन् ऊनो नमति । ऊनो नमन् अनाप्तकारी भवति । अनाप्तकारी न भगवन्तमाप्नोति" इति । आचार्यनामग्रहणे[3] भगवन्नामग्रहणे[4] च अञ्जलिबन्धादिक तत्र तत्र ग्राह्यम् । दर्शितश्चायमाचार सम्भवपर्वणि व्यासप्रस्तावे "महर्षे कीर्तनात्तस्य भीष्म प्राञ्जलिरब्रवीत्" इति ।

भगवत्सेवाप्रकार ।

एवं यथार्ह प्रणम्योत्थितश्च[5] भगवत पुरस्ताद्दक्षिणतोऽवस्थाय गुरुपरम्परया भगवन्तं शरणमुपगम्य पावन-मनोहरत-द्दर्शनानन्दबृंहितसर्वाङ्ग प्रीतिपरीवाहरूपाणि स्तव्य-स्तवप्रियवशीकरणानि स्तोत्राणि पठेत् । भगवदर्चावतारदर्शनमाहात्म्य[6] चैवमुक्त श्रीपौष्करे—

"सन्दर्शनादकस्माच्च पुंसा संमूढचेतसाम् ।
कुवासना कुबुद्धिश्च कुतर्कनिचयश्च य ।
कुहेतुश्च कुभावश्च नास्तिकत्व लय व्रजेत् ॥" इति ।

अन्यत्र तु महतामपि पातकाना प्रायश्चित्ततया विधीयते । "अहरेकं हरेर्बिम्बमापीठादवलोकयेत्" इति ।

[1] इत्यादीनामप्यविरोध —घ
[2] स्पर्शविषयविशेष—छ
[3] आचार्यदर्शने—क, ख, ग, ङ, च, छ, झ
[4] भगवतो नामग्रहणे—घ
[5] चकार· क, च, झ कोशेषु नास्ति.
[6] माहात्म्यशब्दो घ कोशादन्यत्र विमुक्त

"आपीठान्मौलिपर्यन्त पश्यत पुरुषोत्तमम् ।
पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम् ॥" इत्यादि च ।

स्तुति-सङ्कीर्तनादेश्च प्रभाव —

"एष मे सर्वधर्माणा धर्मोऽधिकतमो मत ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नर सदा ॥"

"कलौ सङ्कीर्त्य केशवम् ।"

"कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुण ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः पर व्रजेत ॥"

इत्यादिषु ग्राह्य ।

**भगवत्प्रसाद-स्वीकारप्रक्रिया ।**

अत्र भगवत्प्रसादलब्धं तुलसी-पादोदकादिकं यत्किञ्चिदपि प्रणिपात-पुर सर हर्षोत्फुल्लकपोल शिरसा सम्भाव्य यथार्ह-मुपयुञ्जीत । अत्र "प्रतापभूपरचितस्तथाचमन-निर्णय" इत्यादौ शिष्टा पठन्ति—

"आम्रेक्षुदण्ड[1]ताम्बूलचर्वणे सोमपानके ।
विष्णवङ्घ्रितोयपाने च नाद्यन्ताचमनं स्मृतम् ॥" इति ।

तन्मूलभूता चाथर्वणश्रुतिर्नारायणमुनिभि सगृहीता । "भगवान् पवित्र वासुदेव पवित्रं तत्पादौ पवित्र[2] तत्पादोदकं पवित्र न तत्पान आचमनम्, यथा हि सोमे" इति । एव भगवत्सेवयात्मान कृतार्थ मन्यमानो भगवदनुज्ञया क्वचिन्निभृतमुपविश्य जपादिभिरुपासीत ।

[1] आम्रेक्षुखण्ड—घ, ङ, छ.

[2] तत्पादौ पवित्र—क, झ कोशयो नास्ति.

भगवन्मन्दिरे च तत्तच्छास्त्रोदितान् अपचारान् परिहरेत् । एवं तु श्रीवाराहे पुराणे द्वात्रिंशदपचारा पठिता·—

द्वात्रिंशदपचारा ।

"श्रीधरण्युवाच—

"देवदेव जगन्नाथ श्रुत त्वत्तो मयाखिलम् ।
यान् कृत्वा योग्यता यान्ति तव वेश्मप्रवेशने ॥
तान् ब्रूहि देवदेवेश भक्तवत्सल माधव ।"

श्रीभगवानुवाच—

"अपचारानहं वक्ष्ये तच्छृणुष्व वसुन्धरे ॥
गीतवादित्रनृत्तादिपुण्याख्यानकथाश्च ये ।
लोपयन्त्यथ पारुष्यैर्मम वेश्मसु मानवा ॥
ते यान्ति वसुधे पापा नरकानेकविंशतिम् ।
ततस्तेऽपि महाभागे गार्दभीं योनिमाश्रिता ॥
वर्तन्ते तत्र वै देवि सप्त जन्मानि सौकरीम् ।
वस्त्रेणाच्छाद्य देह तु यो नर प्रणमेत्तु माम् ॥
श्वित्री च जायते मूर्खस्त्रीणि जन्मानि भामिनि ।
कृष्णकम्बलसवीतो यो नर प्रणमेत्तु माम् ॥
चण्डालयोनिता याति जन्मानि नव पञ्च च[1] ।
तैलेनाभ्यक्तसर्वाङ्ग उपानद्गूढपादक ॥
यो नरः प्रविशेद्गेह मम भूतधरे शुभे ।
स याति गृहपालाना योनौ[2] जन्मत्रय शुभे ॥

[1] भुवि पञ्च च—घ

[2] गृहजालाना योनि—घ, ङ, छ

नखरोमाणि यश्चैव केशास्थीनि तथैव च ।
य क्षिपेन्मम गेहेषु तस्य पापफल शृणु ॥
माक्षिकीं योनिमाश्रित्य नखरोमचितस्तदा ।
सप्त जन्मानि तत्रैव नरकानेकविंशतिम् ॥
ताम्बूल चर्वितं यस्तु प्रक्षिपेन्मम मन्दिरे ।
स याति नरक घोर यावदाभूतसम्प्लवम् ॥
ततो मुक्तो महाभागे शुनकोऽपरजन्मनि ।
सस्थितस्त्रीणि जन्मानि वसत्येव न संशय ॥
निष्ठीवनकरो यस्तु मन्दिरे मम सुन्दरि ।
कृमिभक्ष्ये पतेद्घोरे नरके पापकृन्नर ॥
श्लेष्मातकतरुर्भूत्वा जायते जन्मपञ्चकम् ।
श्मशानमध्ये गत्वा तु यो नरो मामथार्चयेत ॥
सप्तजन्मकृतात् पुण्यात्तत्क्षणान्मुच्यते नर ।
सार्गालीं[1] योनिमाश्रित्य वसेज्जन्मत्रयं शुभे ॥
मूत्रयेन्मन्दिरे यस्तु मम देवि शुभानने ।
स मूत्रगर्तनरके पतत्येव ह्यवाक्छिरा ॥
तस्मान्मुक्तस्तु रक्तादिनिम्बर्क[2]द्रुममास्थित ।
जनिष्यति वरारोहे ह्यष्टजन्मानि सौकरीम् ॥
पुरीष वा प्रकुर्वीत यो नरो मम मन्दिरे ।
स याति नरकान् घोरान् पर्यायेणैकविंशतिम् ॥
ततो मुक्तो महाभागे विष्ठाया जायते कृमि ।

[1] मार्जाली—घ

[2] बिम्बकद्रुम—ङ, छ

अनुगम्य यथा प्रेतमिच्छया यस्तु मानव ॥
आराधितुमथेच्छेन्मा स व्रजत्यधमा गतिम् ।
बलिभुग्योनिता याति जन्मानि भुवि भूधरे ॥
भरण तु तथा कृत्वा मृतकस्य वसुन्धरे ।
मन्दिरं न प्रवेष्टव्य प्रविष्टस्य फल शृणु ॥
चाण्डाली योनिमाश्रित्य जन्मकृन्नव पञ्च च ।
भविष्यति वरारोहे व्याध क्रूरोऽथ निष्ठुर ॥
भुक्त्वा श्राद्ध महाभागे मनुजो मामथार्चयेत् ।
चटकत्वमनुप्राप्य ततो गोधावपुर्गत ॥
छायामाक्रम्य यो मोहाद्विमानस्य वसुन्धरे ।
प्रदक्षिणमकुर्वस्तु यस्तिष्ठेन्मतिपूर्वकम् ॥
तिष्ठेत् स कानने शून्ये कण्टकैर्बहुभिर्वृत· ।
फलपुष्पविहीनश्च अरण्ये शून्यवृक्षताम् ॥
समीपे मन्दिरस्यापि शकृन्मूत्र करोति य ।
स तिष्ठेद्रौरवे घोरे वर्षाणामयुतं शतम् ॥
ततोऽपि मनुजो मुक्तो ग्रामसूकरजातिताम् ।
ग्रामे जन्मशतं सुभ्रु विष्ठाभुक् सूकरस्तथा ॥
अनिबद्धप्रलापान् ये कुर्वते मम सन्निधौ ।
तेऽपि तित्तिरिता गत्वा जायन्ते जन्मपञ्चकम् ॥
आरोपित प्रदीपं ये नयन्त्यन्यत्र मन्दिरात् ।
अन्धास्तेऽपि भविष्यन्ति जन्मानि नव पञ्च च ॥
कथाया कथ्यमानाया मन्दिरे मे वरानने ।
अनादृत्य च ये यान्ति तेषा पापफल शृणु ॥

बधिरास्ते भविष्यन्ति मूका वै जन्मपञ्चकम् ।
पादौ प्रसार्य ये गेहे शेरते मे नराधमा ॥
लाला विसृज्य चोच्छिष्टा तेषा पापफल शृणु ।
तोयहीनेऽतिरौद्रे च वने वै शून्यवृक्षताम् ॥
जायन्ते सप्त जन्मानि ततश्चण्डालता ययु [1] ।
दरिद्राश्चैव मूर्खाश्च भविष्यन्ति त्रिजन्मकम् ॥
अन्यदेवार्थसन्दिष्टै पुष्पैर्यो मामथार्चयेत् ।
ममैव तु महागेहे मण्डूकत्वं व्रजन्ति ते ॥
जन्मद्वयं तु वैं मूढा शूद्रता यान्ति ते नरा ।
अन्यदेवगृह गत्वा ह्यस्नात्वा यो व्रजेद्गृहम् ॥
ममैव वसुधे तस्य फल पापस्य मे शृणु ।
गृहाद्गृहमथो गत्वा भिक्षार्थी क्षुधित स्वयम् ॥
भिक्षामलब्ध्वा तत्रापि दरिद्रो जायते नरः ।
चत्वारि चैव जन्मानि तेषामन्ते च योऽबुध ॥
चण्डालयोनिमाप्नोति जन्मानि दश पञ्च च ।
अन्यदेवसम यस्तु मन्यते मा तु सोऽधम ॥
चण्डालयोनिता याति जन्मानि नव पञ्च च ।
कुसुमाना निवेद्याना गन्धमाघ्राति यो नर ॥
स पूतिगन्धसंयुक्त कुष्ठी चैव धरे शुभे ।
भवति त्रीणि जन्मानि भवत्येव न सशय ॥
विष्णुस्थानसमीपस्थान् विष्णुसेवार्थमागतान् ।
श्वपचान् पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ॥

[1] ययुरित्येव सर्वत्र पाठ

उत्सवे वासुदेवस्य य स्नाति स्पर्शशङ्कया ।
स्वर्गस्था पितरस्तस्य पतन्ति नरके क्षणात् ॥
पिबेत् पादोदक विष्णोर्वैष्णवाना विशेषत ।
तत्र नाचमन कुर्याद्यथा सोमे द्विजोत्तम ॥"

"इति श्रीवाराहे पुराणे धरणीप्रश्ने द्वात्रिशदपचारो नाम पञ्चचत्वारिंशोऽध्याय ॥" इति ।

अन्यत्र[1] तु द्वात्रिशदपचारा प्रकारान्तरेण पठ्यन्ते । तत्र

**प्रकारान्तरेण द्वात्रिशदपचारा ।**

चात्र च उक्तानुक्तसमुच्चय कार्य । तत्रेयमेका प्रक्रिया ।

"अपचारास्तथा विष्णोर्द्वात्रिशत् परिकीर्तिता ।
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ॥
देवोत्सवाद्यसेवा चाप्रणामश्च तदग्रत ।
एकहस्तप्रणामश्च तत्पुरस्तात् प्रदक्षिणम् ॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् ।
पादप्रसारण चाग्रे तथा पर्यङ्कबन्धनम् ॥
शयन भोजन चैव मुधाभाषणमेव[2] च ।
उच्चैर्भाषा वृथाजल्पो रोदनाद्य च विग्रह ॥
निग्रहानुग्रहौ चैव स्त्रीषु साकूतभाषणम् ।
अश्लीलकथन चैवाप्यधोवायुविमोक्षणम् ॥
कम्बलावरण चैव परनिन्दा परस्तुति ।
शक्तौ गौणोपचारश्चाप्यनिवेदितभक्षणम् ॥

[1] अन्ये तु—क, ख, ग, च, झ.
[2] मिथ्याभाषणमेव च—घ, ड, छ

तत्तत्कालोद्भवाना च फलादीनामनर्पणम् ।
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिषु ॥
पृष्ठीकृत्यासन चैव परेषामभिवादनम् ।
गुरौ मौन निजस्तोत्र देवतानिन्दन तथा" ॥ इति ।

एव प्रक्रियान्तराण्यपि तत्र तत्र ग्राह्याणि । तथा --

"प्रमादादपि कीलालं य स्पृशेद्वैष्णवो नर ।
उपचारशतेनापि न क्षमामि वसुन्धरे ॥
स्वाधीनशयन जल्पं स्वाध्यायं च विशेषत ।
आमनारोहण चैव न कुर्यात् केशवालये ॥
यो विष्णो प्रतिमाकारे लोहभाव करोति च ।
यो गुरौ मानुष भावमुभौ नरकपातिनौ" ॥

इत्याद्युक्तान्यपचारान्तराण्यपि द्रष्टव्यानि । एवं भगवन्मन्दिरे सावधानः परिहृतापचार पूर्ववत् प्रणम्य विष्वक्सेनादीन् अनुज्ञाप्य निर्गच्छेत् ।

**प्रातर्होमाभिगमने ।**

तत स्वदेवाधिष्ठितमाश्रमगृहादिकमागत्य, सुप्रक्षालितपाणिपाद स्वाचान्त स्वर्ण-रजत-ताम्रादिपात्रै स्वयं पूर्वाह्नेन मणिकस्थेन वा[1] गृह सम्प्रोक्ष्य, स्वसूत्रविधिना स्वाग्नि भगवदात्मकं हुत्वा, देवगृहमागत्य दूरात् प्रणमेत् । अत्र चैवमभिगमन वङ्गिविशेश्वरैर्दर्शितम्—-

"तत कुम्भ समादाय शुचिनापूर्य वारिणा ।
हरेराराधनार्थाय मौनी नियतमानस ॥

[1] जलेन—इति विशेष्यपदम् अपेक्षित न कस्मिंश्चिदपि कोशे दृश्यते

पाषण्डावेक्षणादीनि वर्जयन्[1] यत्नत पथि ।
ध्यायन्नारायण देव यागभूमि समाश्रयेत् ॥
तत प्रक्षाल्य चरणौ स्वाचान्त सुसमाहितः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो ऽथवा मुनि ॥
समिदाज्यादिभिर्द्रव्यैर्मन्त्रैरपि यथोदितै ।
हुत्वाग्नीनग्निहोत्रादावुक्त कालमपि क्षिपन् ॥
पराराधनरूपेण कृतेनैव स्वकर्मणा ।
कृते निष्कल्मषे शुद्धे स्वस्मिन् मनसि सुस्थिते ॥
लब्धाधिकारो देवस्य ध्यानार्चनजपादिषु ।
विनिष्क्रम्याग्निशालाया गत्वा यागगृहं स्वकम् ॥
अर्चयित्वा परात्मानं देशकालाद्यपेक्षया ।
पत्रै पुष्पै फलैर्वापि पूजाकालोक्तवर्त्मना[2] ।
केवलाञ्जलिना वापि विहितेन यथा तथा" ॥ इति ।

अत्र पराराधनरूपेण कर्मणा शुद्धान्त करणस्य ध्यानार्चनादिष्वधिकारविधानात् केषाचित् कुदृष्टीना मत निरस्तम् । उक्त च कुदृष्टिमतोपन्याससमध्ये परकालसूरिभि ।

"स्तुतिजपनिजबिम्बालोकनध्यानसेवा-
स्मृतिकथनसमर्चाकर्मभि श्रौतदूरै ।
वृषभशिखरिनाथ त्वामभीप्सन्ति केचि-
च्छ्रुतिपथपरिनिष्ठप्रापणीयाङ्घ्रिपद्मम्" ॥ इति[3] ।

[1] वर्जयेत्— क, ख, ग, च, झ
[2] पूर्वकालोक्तवर्त्मना—घ, ङ, छ
[3] "इति" शब्द च कोश एव दृश्यते.

एवं च संगृहीतं नारायणमुनिभि —

"पाषण्डादिभिरालापदर्शनादीनि वर्जयेत् ।
गृहानागत्य सक्षाल्य पादावाचम्य वाग्यत ॥
द्वारपालाननुज्ञाप्य प्रविश्य सदनं हरे ।
अभिगम्य च देवेशं निभृत परया मुदा ॥
मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुर पादान् शिरस्तत्रैव पञ्चमम् ॥
अष्टाङ्गेन प्रणामेन दिव्यशास्त्रोदितेन च ।
प्रणमेत् पुण्डरीकाक्ष भक्तिभारावनामित ॥
द्वयेन तद्विवरणै प्रपद्य प्रभुमीश्वरम् ।
निक्षिप्य चिरमात्मान तत्पादाब्जे कृती भवेत्" ॥ इति ।

इह च—

"ब्राह्मे मुहूर्ते संप्राप्ते उत्थाय शयनात्तत ।
स्नात्वाभ्यर्च्य जगन्नाथ समाराधनमाचरेत्[1]" ॥

इत्येतावत् सात्त्वतोक्त सर्वेषा[2] समानम् । शेष तु तावत्[3] तत्तत्सहितानिष्ठानामेव । एवं सहितान्तरेषु कालान्तरकर्मस्वपि ग्राह्यम् । जयाख्यसंहिताया तु सर्वसंहितोक्ताभिगमनं सग्रहेणोक्तम्—

"ब्राह्मान्मुहूर्तादारभ्य प्रागंश विप्र वासरे ।
जपध्यानार्चनस्तोत्रै कर्मवाक्चित्तसयुतै ।
अभिगच्छेज्जगद्योनि तच्चाभिगमन स्मृतम् ॥" इति ।

[1] समिद्दान समाचरेत्—घ

[2] "सर्वेषा" इति पद घ, ङ, छ कोशेषु नास्ति

[3] "तावत्" इति शब्द घ, ङ, छ कोशेषु नास्ति.

पाद्मे च आद्यन्तकर्मावच्छेदेन दर्शितम्—

"कल्याणाचरणान्त यत् कर्मजात चतुर्मुख ।
उत्थानादिक्रमादेतदभियानमुदीरितम् ॥" इति ।

सन्ध्योपासनानन्तरकृत्य चैव विवृतम्—

"अभिवाद्य गुरून् वृद्धांस्तथा भागवतान् क्रमात् ।
प्रविश्य स्वाश्रम देवमभिगम्य यथाविधि ॥
अर्चयेज्जपहोमान्त दद्याद्ग्रास गवामपि ।
अञ्जनालेपनैः स्रग्भिर्वासोभिर्भूषणैस्तथा ॥
अलक्तकरसाद्यैश्च ताम्बूलमुखशोधनैः ।
उपेतो मङ्गलैरन्यैर्नयेदभिगमक्रियाम्" ॥ इति ।

एतेन 'देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्' इति स्मृत्यभिप्रेतमपि विवृतम् । अत्र च 'उपेतो मङ्गलैरन्यैः[1]' इति वचन तत्तदाश्रमाविरुद्ध-मङ्गलदेवतावल्लभ-गुरुपूजास्तुतिनमस्कारादिकमपि सगृह्णाति । 'ग्रास गवामपि' इत्येतच्च परगोविषयम् । 'ग्रासमुष्टिं परगवे दद्याच्चैव न लोपयेत्' इति श्रीवैष्णवधर्मशास्त्रोक्तेः । कृष्णकल्पेऽप्युक्तम्—'दद्याद्ग्रासम्' इत्यारभ्य, 'गोषु चैव प्रसन्नासु गोपालोऽपि प्रसीदति' इति । गवादिषु चान्तःस्थितो भगवान् भाव्य इति जयाख्यसहितायामुक्तम्—

"सोमसूर्यान्तरस्थ च गवाश्वत्थाग्निमध्यगम् ।
भावयेद्भगवद्विष्णु गुरुविप्रशरीरगम्" ॥ इति ।

अतस्तत्र तत्र प्रयुक्तेष्वपि कर्मसु न देवतान्तरभजनरूपत्वप्रसङ्गः । एवं व्यासाद्युक्तदेवादिनमस्कारो[2]पहारनिवेदन-पुष्पादिप्रदान-वृद्धाभिवादन-गुरूप-

[1] उपेतो मङ्गलैरन्यैर्नयेदभिगमक्रियाम् इति क, ख, ग, च, झ कोशेषु पूर्णमुपात्तम्
[2] देवतानमस्कार—क, ख, ग, च, झ , देवतादिनमस्कार—ङ, छ

सेवनं[1]-तद्विताचरण-वेदाभ्यास-जपाध्ययन-धारण-तदर्थविचारण-धर्मादिशास्त्र - वैदिकनिगमवेदाङ्गावेक्षणप्रभृतीनि प्रथमकालकर्तव्यानि पूर्वाधिकारविशोधित-प्रक्रियया प्रतिसन्धेयानि । इति व्याख्यातमभिगमनम् ॥

---

उपादानम् ।

अथोपादान व्याख्यास्याम । तच्चैवं संगृहीत वङ्गिवशेश्वरै.—

"प्राप्तेऽथाह्नो द्वितीयेऽशे स्वास्त्रमन्त्रेण धर्मत ।
आर्जयित्वार्चनाद्रव्यमशेषं च यथोदितम्" ॥ इति ।

उपादानार्हाणि अनर्हाणि च द्रव्याणि ।

तदेतद्व्याख्यात नारायणमुनिभि —

"अह्नो द्वितीयभागेन कृष्णाराधनतत्पर ।
द्रव्याण्याराधनार्थानि शास्त्रीयाणि समार्जयेत् ॥
प्रभूतानि विशुद्धानि शुद्धदेशोद्भवानि च ।
अरौद्राण्यनिषिद्धानि संगृहीतानि वैष्णवै ॥
सुगन्धीनि मनोज्ञानि पुष्पाण्यभिमुखानि च ।
वासासि धनधान्यानि चन्दनाद्यनुलेपनम्[2] ॥
अन्यानि हविरर्थानि तानि मूलफलानि च ।
सक्षालितानि बहुशो देवभोग्यानि यानि च[3] ॥

[1] गुरूपासन—घ, ङ, छ

[2] चन्दनान्यनुलेपनम—ङ, च, छ

[3] वासासि इत्यारभ्य, देवभोग्यानि यानि च इति यावत् सार्धश्लोक क, ख, ग, झ कोशेषु विमुक्त

दधिक्षीराज्यमुख्यानि द्रव्याणि च विशेषत ।
उत्तमानुपदशाश्च मुद्गमाषादिकान्यपि ॥
ताम्बूलादीनि चान्यानि सर्वाण्यादाय सादरम् ।
यथार्ह तानि सस्कृत्य प्रक्रमेतार्चन तत " ॥ इति ।

यत्तूक्त श्रीसात्त्वते—

'प्रातरुत्थाय चिन्वीयात् स्वारामात् स्वयमेव हि ।
पूजार्थमस्त्रमन्त्रेण पुष्पादीन् यत्नत सदा ॥
यायादरण्यमथवा निर्बाध हि तदार्जयेत् ।
अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥
हृद्या सुगन्धा कर्मण्या ग्राह्या सर्वे सितादय ।
उग्रगन्धास्त्वकर्मण्यास्त्वप्रसिद्धास्तथैव च ॥
चतुष्पथशिवावासश्मशानावनिमध्यजा ।
क्षता अशनिपाताद्यै क्रमिकीटसमावृता ॥
वर्जनीया प्रयत्नेन पत्रपुष्पफलादय ।
अम्बुजानि सुगन्धीनि सितरक्तानि कानिचित् ॥
योक्तव्यानि पवित्राणि नित्यमाराधने तु वै ।
साङ्कुराणि च पत्राणि भूगतान्येवमेव हि ॥
विहितान्यर्चने नित्य यथर्तुप्रभवानि च ।
न गृहे करवीरोत्थै कुसुमैरर्चन हितम् ॥
विशेषत सकामस्य सिद्धिभूतियुतस्य च ।
अतोऽन्यथा न दोषोऽस्ति दोष उन्मत्तकादिभि ॥
सद्यो हृताना विहित त्वम्लानाना यथाक्रमम्[1] ।

[1] यथाक्रियम्—घ, यथाक्रिय —ङ, छ

प्रदानमम्बुसिक्ताना तेषा कार्यं न चान्यथा ॥
निर्दोषता प्रयान्त्याशु मन्त्रिणामवलोकनात् ।
भवन्ति भक्तिपूतानि हृन्मन्त्रनिरतात्मनाम् ॥" इति ।

तदिदं नियमपरिच्छेदानुशिष्टत्वाद्विपर्ययानर्हमवधातव्यम् । शक्तमधिकृत्य चात्र स्वारसिक स्वयंप्रवृत्त्यादिकमुपदिश्यते । पक्षान्तरस्याप्यन्यत्रानुज्ञानात् । अत्र वैशेषिकार्चनादिषु कदाचित् प्रात शब्दस्य मुख्यार्थता । अन्यथा त्वभिगमनविधिना प्रात कालोपरोधात् । अन्येषु च सर्वेषु शास्त्रेषु द्वितीयकाल एव द्रव्यार्जनविधानात् । प्रातःशब्देन सन्निकर्षवशात् त्वरातिशयसिद्ध्यर्थं तदुचितकालो लक्ष्यते । "सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्" इतिवत् । अत एवात्रत्यमुत्थान च न स्वापानन्तरभावि । अपि तु "तत [1]पुष्पफलादीनामुत्थायार्जनमाचरेत्" इति जयाख्यसंहितोक्तमभिगमनानन्तर देवसन्निधेरुत्थानम् । इह च श्रीवैष्णवधर्मशास्त्रोक्तपुष्पनियम पूर्वाधिकारे प्रसङ्गाद्दर्शित । पाद्मे त्वेवं विचित्रद्रव्योपादानमुक्तम्[2]—

"उपादद्यात्तथा [3]पूजासाधनानि यथातथम् ।
पुष्पाणि फलमूलानि विविधान्योषधीरपि ॥
दध्यादि च हविर्योग्यतण्डुलानि[4] गुडानि च ।
स्नानीयान्यपि वस्त्राणि स्वादूनि सलिलानि च ॥

[1] पुष्पकुशादीना—घ, ङ, छ
[2] द्रव्योपार्जनमुक्तम्—क, ख, ग, झ
[3] उपादद्याद्यथापूर्वं—क, झ , उपादद्याद्यथापूजा—ख, ग, च
[4] तण्डुलादि—घ

दर्भान् पत्राणि[1] समिधो यथाशक्ति यथावसु ।
आहृत्य याच्ञयार्थैर्वा[2] पूजास्थाने निवेशयेत् ।
नीत्वोपादानसमयमित्थं तदनु पूजयेत् ॥" इति ।

अस्या संहिताया संहितान्तरेषु पुष्पप्रकरण-हविष्पाकप्रकरणादिषु[3] च हेयोपादेयसमस्तद्रव्यविभागो द्रष्टव्य । अत्र याच्ञयेत्युक्तोऽयं[4]मधमाधमपक्ष ।

" स्वप्रयत्नकृतं शस्तं मध्यम वन्यमुच्यते ।
अधमं तु क्रयक्रीत याचित[5] त्वधमाधमम् ॥ "

इति पुष्पप्रकरणोक्तस्य सर्वेषु द्रव्येष्वविशेषेण सञ्चरणात् ।

पुष्पेषु वर्ज्यानि अवर्ज्यानि च ।

भोजराजस्त्वेव पुष्पेषु राजस-तामसादिविभागं पुष्पाङ्कुर-पत्र-मूल-धूप-दीप-वस्त्राभरणेषु वर्ज्यावर्ज्यविभाग च[6] सजग्राह—"अथ पुष्पाणि त्रिविधानि—सात्त्विकानि राजसानि तामसानीति । शुक्लानि सात्त्विकानि । रक्तानि राजसानि । कृष्णानि तामसानीति । शुक्लानि द्विविधानि—शुक्लवर्णं वलक्षमिति । शुक्लं शंख-कुन्देन्द्वादिवर्णम् । वलक्षं स्फटिकवर्णादि । रक्तं द्विविधम्—रक्तम् अरुणमिति[7] । रक्त जपाकुसुमादिवर्णम् । अरुण किंशुकादिवर्णम् । पीत द्विविधम्—पीत हरितमिति । कृष्णं द्विविधम्—

[1] पर्णानि—घ, ङ, च, छ
[2] याच्ञयार्तैर्वा—क, झ, याच्ञया तेर्वा—ख, ग, याच्ञयार्थानि (?) (प्तानि) घ.
[3] हवि प्रकरणादिषु—क, ख, ग, च, झ
[4] अय इति शब्द घ, ङ, छ कोशेषु न दृश्यते
[5] पारम्य—क, ख, ग, च, झ
[6] घ कोश एव 'च' कारो दृश्यते
[7] अरुण चेति—क, ख, ग, च, झ

नील श्याममिति[1]। नीलं तापिञ्छादि[2]। श्यामं विष्णुक्रान्तादि[3]। फलमेषा भिद्यते—सात्त्विकादर्धफलानि राजसानि, तस्मादर्धफलानि[4] तामसानि इति। एतानि स्वारामोत्पादितानि,[5] आरण्यानि, क्रीतानि, प्रतिग्रहाल्लब्धानि, याचितानि[6] ग्राह्याणि पञ्चविधानि पुष्पाणि। तत्र स्वारामजमुत्तमम्। आरण्य मध्यमम्। क्रीतमधमम्[7]। [8]याचितमधमाधमम्[9]। प्रतिग्रहपुष्पे दातुरेव फलम्। कर्तु किञ्चिद्भवेन्नवा। तस्मात् प्रतिग्रहलब्धैः पुष्पैर्नार्चयेत्।

करवीरौ पद्मौ [10]जाति-मल्लिकोत्पलानि तिन्त्रिणी[11]-तगर चम्पक-श्वेतार्क-कुटज-वकुल-कन्दली[12]-तुलसी-तमाल-वनमाले[13]-मरुवक-शमी-सिन्दुवार-पलाश-सहदेवी-फणिज्जक-पुन्नाग-वंशपुन्नाग-क्षुद्रपुन्नाग-मालती-श्वेतकुमुद-कन्दल-पद्म-महापुष्प-नाग-सदाभद्रा-प्रियङ्गु-बिल्व-वनमल्लिका-लक्ष्म्यगस्त्यद्वयं[14] वैष्णवी कर्णिकार(रो) द्वावशोकौ कुटजस्तथा[15] कारण्ड-नन्द्यावर्तद्वय-

[1] श्यामल—क, ङ, च
[2] नील तापिञ्छादि—ख, ग, च कोशेषु विमुक्तम्
[3] कृष्णश्याम विष्णुक्रान्तादि—च
[4] राजसादर्धफलानि—क, ख, ग, च, झ
[5] स्वारामोत्पन्नानि—क, झ, स्वारामोत्पन्नादीनि—च
[6] अयाचितानि—ख ग, घ, च, छ
[7] क्रयक्रीत—घ
[8] अयाचित—घ
[9] याचितमधमाधमम्—क, ख, ग, झ कोशेषु विमुक्तम्
[10] केतकीजाति—क, ख, ग, च, झ
[11] त्रीणि—घ
[12] कदली—क, ख, ग, ङ, च, छ, झ.
[13] वनमाली—घ, ङ, छ
[14] अतसीद्वय—छ
[15] लक्ष्म्यगस्त्यद्वयवैष्णवीकर्णिकाराशोककुटजस्तथा—क, ख, ग, च, झ.

क्षुद्रकेतक्य इत्यादीनि पुष्पाणि । एतानि तिथिभेदेन ग्रहणायन-सङ्क्रान्ति-व्यतीपात-विषुवादिभेदात् सङ्गवादिकालविशेषाच्च समग्रफलानि भवन्ति । तत्र तिथिपुष्पाणि—वैष्णवी कंदल[1]-पद्म-लक्ष्मी-सिन्दुवार-द्रोण-प्रियङ्गु-मालती-पाटल-केतकी-जातिमल्लिका-महाजाति-पलाशाश्वत्थपत्राणि तिथीनामानुपूर्व्येण पुष्पाणि गृह्णीयात्। नन्द्यावर्तकै सङ्क्रान्त्या भगवन्त पूजयेत् । उपनन्द्यावर्तकैरयने । विषुवे तुलसीभि । व्यतीपाते फणिज्जकै । ग्रहणे [2]मरन्दै (?) पूजयेत् । सङ्गवे [3]तत्तत्तिथिचोदित पुष्प गृह्णीयात् । समे पद्मै, धर्मे कुमुदै, करवीरैर्विष्णुप्रिये, बिल्वपत्रैर्विरागे भगवन्तं पूजयेत् ।

अत्र सङ्गवादय काला अहरह प्रवर्तन्ते । सङ्गव समो विष्णुप्रियो धर्मो विराग इति पञ्च काला अध्यात्मविद्भिरुपदिष्टा । उदयात् पञ्चनाडीभ्य[4] सङ्गव उक्त । तस्माद्विगुणमात्रात्[5] सम उपदिश्यते । तावता विष्णुप्रिय· । तावता धर्म । तावता विराग इति । तत्र पूर्वापरौ भूत्वा[6] नाडीद्वयत सङ्गवादयो मुहूर्ता उक्ता । तत्र सङ्गवे वैकुण्ठस्य प्रीति, समेऽनिरुद्धस्य, विष्णुप्रिये शिशुमारस्य, धर्मे बडबामुखाग्ने, विरागे कपिलस्येत्येवं पञ्चाना पञ्च प्रीतिकालविशेषा । दिवापुष्पैर्दिवापूजा मुख्या, रात्रिपुष्पैर्निशि, विहितेष्वपि, छिद्रं मुकुल जीर्ण पर्युषितं भुक्तशेष घ्रात परिम्लानमस्पृश्यस्पृष्ट जन्तुभिर्भक्षित[7] जन्तुभिरधिष्ठितमशुभदेशे पुष्पितमापद्यपि न गृह्णीयात् ।

[1] वैष्णव्ये, कदली—क, ग, च, झ, वैष्णव्ये कन्दल—घ, ङ, छ
[2] मरन्दै इत्येव बहुषु पाठ , मकरन्दै —ङ, छ, मन्दरकै मकरन्दै —घ
[3] तत्तिथि—ग, घ
[4] नाड्य —क, ख, ग, च, झ
[5] द्विगुणमात्र —क, च, झ
[6] भूत्वा इत्येत्र सर्वत्र पाठ
[7] जन्तुभिर्भक्षित—क, ख, ग, घ, झ कोशेषु नास्ति

पाणी प्रक्षाल्य पात्रे पुष्पाणि गृह्णीयात् । पिधाय स्थापयेदनातपे प्रदेशे[1] यथा न परिम्लायते । केवलपुष्पनिवेदनात् माला वरा । मालाया स्रग्वरा । एकगुणा माला, बहुगुणा स्रक् । तत्र सूत्रै पुष्पाणि न ग्रथ्नीयात् निर्माल्यसमानि भवन्तीति । देवोद्दिष्टाना निन्दा न कुर्यात्, प्रशसामेव सर्वदा कुर्यात् । देवोद्दिष्टं मनुष्यो न गृह्णीयात् देवस्वं भवतीति । यत्किंचित् पीतवर्ण पुष्पं जलजं स्थलजं वा तदापदि सग्राह्यम् । अनुक्तमपि नान्यत्र[2] । तत्रापि वर्जनीयानि विशेषेण वर्जयेत् ।

कारण्ड[3] कृष्णवर्ण कपित्थ गिरिकर्णिकाम्र-विभीतक-शिरीष-मदयन्ति-निर्गुण्डि-सिन्दुवार-किंशुक-शल्मली-जपार्क-कनकोन्मत्त-कारञ्ज-विषपादप-बन्धूक-माधवी-नीपार्जुन-पाटलि-चिञ्चा-कोशातक्यलाबू-शिग्रू[4] इत्येतानि वृक्षवल्लीषु विशेषेण[5] वर्जयेत् । यव-मुद्ग-प्रियङ्गु-निष्पाव-शण-दूर्वा-भूतृण-माषाणामेवाङ्कुराणि गृह्णीयात् । अन्येषामङ्कुराणि निर्माल्यसमानि भवन्ति इति । अपामार्ग-सदाभद्रा-तुलसी-विल्वाश्वत्थ-पलाश-धातकी-तमाल-गन्धपूर्ण-कृष्णा-ब्राह्मी-शमीवृक्षाणामेव पर्णानि गृह्णीयात् । उत्पलानामेव मुकुलं गृह्णीयात् । पद्मोत्पलादीना जलजाना दिनद्वयादूर्ध्वं पर्युषितत्वम् । सर्वेषा मूलाना-मुशीरमूलमेव विशिष्टम् । देवदारुकृतं धूप चन्दनागरुमिश्रितं विधूमाङ्गार-सम्भव शस्तम् । सालसर्ज्जरस कृष्णागरुमिश्रित[6] प्राण्यङ्गवर्जितमन्य वा धूपं निवेदयेत् । पात्रे गव्येन सर्पिषा दिव्येन[7] तैलेनापि कृतं सूत्रवर्तियुतं

[1] अप्रतापे प्रदेशे—क, ख ग, च, झ
[2] अनुक्तमप्यन्यत्र—क, ख, ग, झ
[3] कोरण्ड—ग, घ, ङ, छ
[4] शिग्रुशब्दस्य स्त्रीत्व चिन्त्यम्, शिग्रु इति क, ट, च कोशेषु पाठ
[5] विशेषेण इति पद घ कोश एव दृश्यते
[6] विधूमाङ्गारेत्यारभ्य कृष्णागरुमिश्रित इति यावत् ङ छ कोशयो न दृश्यते
[7] दिव्येन इति पद घ कोशे नास्ति.

मुखानिलदीपित[1] दीपं भवेत् । दुकूल क्षौम नेत्रम्, सूत्र वा कार्पासिकं सुगन्धधूपित नव वस्त्र भवेत् । हेम-रत्नमयमाभरणं दद्यात् । दोषयुत भुक्तपूर्व वा मनुष्यैर्नाभरणं भवेत्" । इति ।

तदेतन्नानासहितापरामर्शसमुद्धृत सारम्[2] । अन्यदपि सर्व तत्तत्सं-हितासु विस्तरेण द्रष्टव्यम् । श्रीशाण्डिल्यस्मृतौ च काष्ठपर्यन्तवर्ज्यावर्ज्यद्रव्य-विभाग कृत । श्रीविष्णुस्मृत्यादिषु प्राण्यङ्गसुगन्धेषु कस्तूरी-मृगमदयो-रङ्गरागतया परिग्रह । अर्चाया शुक्लाम्बरसमर्पणं पद्म कह्लारेतररक्तपुष्प-वर्जनमित्याद्यपि ग्राह्यम् । योगक्षेमार्थेश्वराभिगमनादिस्वरूपशोधन च पूर्वा-धिकारमिद्ध न विस्मर्तव्यम्[3] ।

एव द्रव्याण्यार्जयत प्रतिग्रहनियमश्च तत्र तत्र सक्षिप्त । यथोक्त श्रीशाण्डिल्यस्मृतौ—

**उपादाने प्रतिग्रहनियम ।**

"कुलटाषण्डपतितवैरिभ्य[4] काकिणीमपि ।
उद्यतामपि गृह्णीयान्नापद्यपि कदाचन" ॥ इति[5] ।

उक्त च श्रीसात्त्वते—

"तस्करात पतितात् [6]षण्डाड्डम्भलोभमदान्वितात् ।
मात्रावित्त न गृह्णीयादभक्तादुपचारत[7]" ॥ इति ।

[1] मुखानिलदीप्तिदीपित—क, ख, ग, च, झ, उखानलदीप्तिदीपित इति चेन्नावीयान्

[2] सारशब्द सर्वेषु कोशेषु नपुसकान्तत्वेनैव लिखितोऽस्ति

[3] प्रस्मर्तव्यम्—घ, ड, छ

[4] स्वैरिभ्य—शाण्डिल्यस्मृतिपाठ

[5] इत्यादि—घ

[6] चण्डात्—सात्त्वतसहितापाठ

[7] अपचारत—क, झ

स्मर्यते च—

"केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत् ॥" इति ।

अत्र[1] पक्वमन्नमपक्वं वा केशवार्चनरूपनित्य[2]धर्मरहिते गृहे न प्रतिग्राह्यम् । उभयत्रान्नशब्दप्रयोगात् । अन्यथा पक्वान्नमिति विशेषेण प्रयोगानुपपत्ते । प्रतिग्रहगुणदोषविस्तरश्च धर्मशास्त्रेषु पठितव्य । सर्वेषु चापदनापद्दशाभाविषु प्रतिग्रहेषु यमोपदिष्टं मन्त्रविशेष भगवान् शौनक स्मरति—

"दानं ददद्भिर्यैरुक्तमच्युत प्रीयतामिति ।
प्रतिग्रहीतृभिश्चैव न ते मद्विषयोपगा ॥" इति ।

तथा बलादिमन्त्रान्तरैरपि तत्तन्निष्ठाना प्रतिग्रहादि । यद्यप्यस्त्रमन्त्रेण सामान्यत सर्वपुष्पादिग्रहणमुपदिष्ट तथापि तुलस्या मन्त्रविशेषास्तत्तत्कल्पेषूपदिश्यन्ते, 'तुलस्यमृतजन्मासि' इत्यादय ।

एवं वृत्त्यर्थतयानुज्ञातैरध्यापन-याजनादिभिरपि यथाशास्त्र प्रयुक्तै समुचितानि समाराधनोपकरणानि सम्पादयेत् । पूर्वनिष्पन्नसंपूर्णद्रव्यस्तु न प्रतिग्रहादिषु प्रवर्तेत । "आपत्स्वनन्तरा वृत्ति" इत्त्यनुज्ञातेष्वपि 'वृत्ति प्राप्य विरमेत्' इति स्मरणात् न नित्यं प्रवर्तेत । कृषि-वाणिज्ये च स्वयं कृते कुसीदं चैवमाद्यमपि[3] गत्यन्तरासम्भवे । 'सतत कीर्तयन्तो मा यतन्तश्च दृढव्रता' इत्याद्युक्तनन्दनवनकरणादियतनमपि पुष्प-फलादिपूजोपकरणार्थतया उपादानकोटौ निविशते । अत्र परिव्राजकाना न स्वयं पुष्पापचयादि

**प्रतिग्रहोपाय-नियमा ।**

[1] तत्र—क, ख, ग, च, झ

[2] नित्यकर्म—क, च, झ

[3] कुसीद चेत्येवमाद्यपि—घ

कर्तव्यम्[1] । यथोक्तं यतिधर्मसमुच्चये—"फलपुष्पोत्पाटने प्रायश्चित्त-विधानादद्भिः कर्तव्यमन्याहृतैर्वा" इति । एषा च वृद्धवसिष्ठस्मृतिस्तत्रो-पात्ता—"जले मत्स्यादीनां स्थले पशु-मृग-सरीसृपादीनां सर्वप्राणिनामभयं दत्वा पुष्प-मूल-फलोपादान-छेदन-मधुमांसानृतवचनदानानि वर्जयेत्" इति । इतरेषां तु स्वयं परतो वा अन्यारामादिसंभूतानामदत्तानां ग्रहणे तस्करत्वमपि स्यात् । इति तत्र तत्र द्रष्टव्यम् । स्मर्यते च द्रव्य-गृह-दारादिनियमो मन्वादिभिः—

"यानशय्यासनान्यस्य कूपारामगृहाणि च ।
अदत्तान्युपभुञ्जान एनसः स्यात्तुरीयभाक् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥" इत्यादिना ।

तदिह साक्षाद्वा परम्परया वा समाराधनोपकरणभूतशास्त्रीयसमस्तद्रव्यो-पादानेषु[2] स्वशक्येषु ध्यानादिविरोधिकायक्लेशकरबह्वायासरहितेषु न्यायतः प्रवर्तेत । इत्युपादानसंग्रहः ।

पूर्वसिद्धद्रव्यस्य आन्तरगुणोपादानम् ।

प्रभूतायासवर्जनमपि हि[3] मुमुक्षूणामवश्यम्भावित्वेन परिगणितेष्वष्टसु गुणेषु गौतमः पठति[4]—"दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति, यस्य तु खलु संस्काराणामेकदेशोऽपि

[1] कर्तव्यम्—घ कोशे नास्ति
[2] द्रव्योपायेषु—क, ख, घ, च
[3] हि शब्दः ग, च, छ कोशेषु नास्ति
[4] प्रभूतायासेत्यारभ्य पठति इति पर्यन्तं ख कोशे विसृष्टम्

अष्टावात्मगुणा अथ स ब्रह्मण सायुज्य सालोक्य च गच्छति[1] " इति । एव सति बाह्यद्रव्यार्जनवत् सम्प्रीणनेषु प्रधानतमानाममानित्वादिगुणाना सदाचार्यसेवा-सत्सम्भाषणादिभिर्ज्ञानवृद्धिहेतुभि न्यायत प्रवृत्तै[2] सम्यग्गुपार्जनमपि पूर्वसिद्धपरिपूर्णबाह्यपूजोपकरणस्य उपादानकोटौ[3] निवेशनीयम् । बाह्यद्रव्याभाव इव गुणाभावेऽपि महाभारताद्युक्ताष्टादशचण्डाल-षड्वृषलसंज्ञितहेयगुणयोगेन अनन्तरभावीज्यानर्हत्वप्रसङ्गात् । अत एव हि तन्निर्बन्धः[4] क्रियते—"श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली" इति । तस्मात समाराधनोपयुक्त[5] बाह्यमान्तरं च सर्वं यथार्हमुपादद्यात् । इति व्याख्यातमुपादानम् ।

सव्य पाद प्रसार्य श्रितदुरितहरं दक्षिण कुञ्चयित्वा
जानुन्याधाय सव्येतरभुजमपरं[6] नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो नवजलदनिभ पातु दिव्य परो न[7] ॥

---

[1] यस्य तु खलु इत्यारभ्य अनूद्यमानो गौतमसूत्रभाग क, ख, ङ, च, छ, झ कोशेषु न दृश्यते

[2] प्रवृत्तै इति पद घ, ङ, छ कोशेष्वेव विद्यते

[3] उपादानकाले—घ, ङ, च, छ

[4] अत एव श्रुतिनिर्बन्ध —क, ग, च, अत एव हि श्रुतिनिर्बन्ध·—ख, अत एव हि श्रुतेर्निर्बन्ध —ङ, छ

[5] समाराधनोपकरण—क, ख, ग, च, झ

[6] सव्येतरमितरभुज—क, ख, ग, च, झ

[7] जुष्टो जनयतु जगता शम वैकुण्ठनाथः इति सङ्कल्पसूर्योदये पाठ·

अथेदानीं मन्त्रसिद्धान्तोपास्यपररूपविषया भोगार्चनमयीम् इज्या भाष्यकारप्रणीतनित्यग्रन्थविवरणमुखेन व्याख्यास्याम ।

इज्याव्याख्यान-प्रतिज्ञा ।

मन्त्रसिद्धान्ते परिवारभेदस्तु गुणीभूत[1]मूर्त्यन्तरयोर्वैकल्पिक ।

तत्र प्रथममधिकारिविशेषे वृत्त-वर्तिष्यमाणयो संगति दर्शयन् ,

"कर्मारम्भेण मन्त्रेण प्राप्त कालमनुस्मरेत् ।
इज्यामेवाभिसन्दध्यात् सा योनि सर्वकर्मणाम्" ॥

इति प्रशसितम्, चिकीर्षितग्रन्थविषयभूतम्, अहोरात्रकृत्ये प्रधानाशं दर्शयति—'अथ परमैकान्तिनो भगवदाराधनप्रयोग वक्ष्ये' इति[2] ।

अथशब्दस्य प्रसिद्धिप्रकर्षसिद्धानन्तर्ये सभवति, अर्थान्तरतात्पर्यपरिग्रहोऽनुपपन्न इति भाष्यादिषु स्थापितम् । अथ गद्यै[3] यथावत् प्रपत्तिप्रतिपादनानन्तरम्, तत एव तन्निष्ठाधिकारिविशेषसिद्धिसमनन्तरं वा[4] । "यथावस्थितस्वरूप रूप-गुण विभूति लीलोपकरणविस्तारमनुसन्धाय तमेव शरणमुपगच्छेदखिलेत्यादिना" इति वक्ष्यमाणानुसाराच्च, अत्र तथाविधशरणागतिविषयगद्यग्रन्थस्य[5] पूर्ववृत्तत्व विवक्षितमिति ज्ञायते । न च तत्र 'अखिलजगदाधार' इत्यादिवक्ष्यमाणमात्रपङ्क्तिर्विवक्षिता । तस्या प्रपत्तिकरणत्वादर्शनात्, यथावस्थितस्वरूप-रूप गुण-विभूत्यादीना च गद्य एव

नित्यग्रन्थस्थस्य अथशब्दस्य विवरणम् ।

[1] गुणभूत—ङ, च

[2] वक्ष्य इत्यादि—क, ख, ग, च, झ

[3] गद्ये—क, ख, ग, झ

[4] वा शब्द क, ख, ग, झ कोशेषु नास्ति

[5] विषयग्रन्थस्य—क, च, झ

प्रपञ्चनात्, "अनन्यशरणस्त्वत्पादारविन्दयुगल शरणमहं प्रपद्ये" इति च तत्र कण्ठोक्ते । तस्माद्यथोक्त एवात्रा[1] अथशब्दार्थ ।

परमश्चासौ एकान्तश्चेति परमैकान्त । सोऽस्यास्तीति परमैकान्ती ।

**परमैकान्तिशब्दार्थ ।** एकत्र अन्तो निश्चय प्राप्यतया प्रापकतया च । तदुभय सभूय परमैकान्त । परमश्चासौ एकान्ती च इति वा समास । तत्राप्यनन्योपायत्वानन्यप्रयोजनत्वयो समुच्चयात् पारम्यम् । अनन्योपायत्व च अनन्यदेवताकत्वपर्यन्तम् । यथोक्तम्—

"चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
तेषामेकान्तिन श्रेष्ठास्ते चैवानन्यदेवता ॥" इति ।

अनन्यप्रयोजनत्व च आत्मानुभवानन्दनैरपेक्ष्यपर्यन्तम् । तदप्युक्तम्—

"ये तु शिष्टास्त्रयो भक्ता फलकामा हि ते मता ।
सर्वे च्यवनधर्माण प्रतिबुद्धस्तु मोक्षभाक् ॥" इति ।

एतेन तुल्यन्यायतया भगवदनुभवानन्देऽपि[2] फलित्वाभिप्रायो निरस्त । मुक्तानन्दस्यापि सार्वभौमान्त पुरशुकक्षीरास्वादनसुखवत् स्वतन्त्रेण परेणैव स्वप्रीत्यर्थमुपपादितत्वात् । एवविधं च परमैकान्तित्व मन्त्रसिद्धान्तादि-निष्ठेष्वपि संभवतीति पूर्वाधिकारे स्थापितम् । दृश्यते च सदाचार्यसका-शाद्यथावस्थितगद्यत्रयादिश्राविणामिदानीमपि तत्सभव । तत्र हि यथावत्पा-रावर्यनिश्चयादन्यभक्त्युन्मूलनेन अनन्यदेवताकत्वादिक च[3] सिद्ध्यति । ता चावस्था स्वयमेवाह भगवान्[4]—

[1] अत्र इति पद क, ख, ग, झ कोशेषु नास्ति
[2] एतेन भगवदानन्देऽपि—क, ख, ग, झ
[3] च इति पद घ कोशे न दृश्यते
[4] आह च स्वयमेव भगवान्—क, ख, ग, झ

"अनन्यदेवताभक्ता ये मद्भक्तजनप्रिया ।
मामेव शरणं प्राप्तास्ते मद्भक्ता प्रकीर्तिता ॥" इति ।

निरतिशयभोग्यभगवत्स्वरूपादिनिश्चयेन विषयान्तरवैमुख्यात् अनन्य-प्रयोजनत्वमपि तत्रैव सिद्ध्यति । यस्या दशाया भगवानत्यन्तासन्न सुहृदादिवत् स्वच्छन्दाराधनयोग्यो भवति । यथोक्त भगवता शौनकेन—

"पराङ्मुखाना गोविन्दे विषयासक्तचेतसाम् ।
तेषा तत्परम ब्रह्म दूराद्दूरतरे स्थितम् ॥
तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतस ।
विषयत्यागिनस्तेषा विज्ञेयं च तदन्तिके ॥" इति ।

**परमैकान्तिना देवतान्तरवर्जनम् ।**

एव परिमितविषयत्यागिना परिमितदेवतान्तरत्यागो नियतो भवति ।

"काङ्क्षन्त कर्मणा सिद्धिं यजन्त इह देवता ।
क्षिप्र हि मानुषे लोके सिद्धिर्भवति कर्मजा ।"
"ब्रह्माण शितिकण्ठ च याश्चान्या देवता स्मृता ।
प्रतिबुद्धा न सेवन्त यस्मात् परिमितं फलम् ॥" इति ।

परिमितफलसङ्ग-तदभावाभ्या[1] देवतासबन्धासबन्धप्रतिपादनात् । अतो यथा,

"परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वेषणाविनिर्मुक्त स भैक्ष भोक्तुमर्हति ॥"

[1] फलसङ्गसदसद्भावाभ्या—घ

इति प्रतिपादितस्य परमात्मेतरसर्वविषयविरक्तस्य प्रव्रजिताधिकारिणो देवतान्तरवर्जनम्, तथा त्रिष्वप्याश्रमान्तरेषु प्रतिबुद्धाधिकारिणः। स्मर्यते च प्रव्रजिताना देवतान्तरार्चनत्याग । अत्रि —

"त्रैकाल्यमर्चन विष्णोर्देवताना तदात्मनाम्।
नमस्कारार्चनादीनि कुर्यान्नान्यस्य कस्यचित्॥" इति।

ऋतु —

"ईश्वरो भगवान् विष्णु परमात्मा महानज ।
शास्ता चराचरस्यैको यतीना परमा गति ॥" इति।

पुन स एवाह—

"ध्यायतेऽर्चयते योऽन्य विष्णुलिङ्गमुपाश्रित ।
कल्पकोटिशतैश्चापि गतिस्तस्य न विद्यते॥" इति।

एवं प्रतिबुद्धाना सर्वेषा देवतान्तरवर्जन प्रागेव दर्शितम्। एतेन—

"देवताप्रतिमा दृष्ट्वा यति चैव त्रिदण्डिनम्।
नमस्कार न कुर्याच्चेदुपवासेन शुद्धयति॥"

इत्यादिकमपि प्रतिबुद्धेतरविषय मन्तव्यम्। प्रतिबुद्धस्यापि स्वनमस्कारयोग्यभगवत्तत्परिवारादिप्रतिमासु लब्धावकाशमेतत्।

**निषेधानुवर्तने समाराधनानर्हत्वम्।**

एवं परमैकान्तिशब्देनाधिकारिविशेष उक्त । तस्य च,

"परदाररतश्चैव परद्रव्यापहारक ।
न स्पृशेन्मामनादृत्य स्पृष्ट्वा च पतितो भवेत्॥"

इत्यादिभिरनर्हतापादकानि सर्वाणि[1] तत्र तत्र द्रष्टव्यानि । सगृहीत च समाराधनोपयुक्तसर्वद्रव्यसाधारण्येन वङ्गिवशेश्वरै —

"निषेधाविषयीभावादृते नैवापरो गुण ।
प्रीतिहेतु परेशस्य स्वार्चनाङ्गेषु वस्तुषु ॥" इति ।

आराधकस्यापि हि अर्चनाङ्गवस्तुत्वमविशिष्टम् । यथा च प्रशस्तजातिष्वेव तुलस्यादिपत्र-पद्मादिपुष्प-रम्भादिफल-गङ्गातोयादिषु तैस्तैरुपहतिनिमित्तैर्निषेधविषयता, एवमाराधकेऽपि यत कुतश्चिदुपघातात् आप्रायश्चित्तादनर्हतया निषेधविषयत्व भवति । अन्यथा 'नाविरतो दुश्चरितात्' इत्यादिश्रुतिकोपप्रसङ्गात् । उपहतिविषयस्पृष्टबिम्बादिषु च प्रायश्चित्तविधानात् । ब्रह्मविदोऽपि ह्युत्तराघाश्लेषवचन प्रामादिकविषयमिति[2] स्थापित भाष्यादिषु । "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इत्यादिभिश्च सूत्रैरयमर्थ सिद्ध । अपि च राजवदुपचारो ह्यत्र विधीयते । राजोपचारवृत्तिश्चापचारपरिहारप्रधाना, तद्वदिहापि । यथा च गुणवति राजनि सेवकाना सापराधानामपि क्षामणमात्रेण निरपराधता तथेहापीति तल्लाभ[3] । इदमपि सगृहीतम्—

"अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि ।
प्रायश्चित्त क्षमस्वेति प्रार्थनैकैव केवलम्" ॥ इति ।

यत्त्वनन्तरमुक्तम्—

"अर्चनादिष्वनर्हत्वान्न कश्चिन्नापराध्यति ।
अतोऽनङ्गीकृताशेषकर्तृदोषविमर्शया ॥
कृपयैवास्य देवस्य सर्वोऽप्यर्हति तत्क्रियाम्" ॥ इति—

[1] सर्वाणि—क, ख, ग, च, झ कोशेषु नास्ति
[2] प्रामादिकादिविषय—घ
[3] इति लाभ —घ, ड, छ

एतदपि क्षामणयोग्यताख्यापकम् । अन्यथा क्षमस्वेति प्रार्थनाविधानानुपपत्ते[1] । न चैतावता कृतापराधेन[2] निर्भयेन भवितव्यम् ।

"प्रक्षालनाद्धि पङ्कस्य दूराऽस्पर्शन वरम्" इति न्यायात् ।

**अकर्मण्यतापादका दोषा ।**

अत्र चाकर्मण्यताहेतूनपराधानेवमाह[3] भगवान्—

"शृणु सुन्दरि तत्त्वेन आहारस्य विनिर्णयम् ।
आहारो यस्त्वनाहारस्तच्छृणुष्व वसुन्धरे ॥
भोजन यस्तु भुञ्जीत मम योगाय माधवि ।
अशुभ कर्म कृत्वापि पुरुषो धर्मसश्रितम् ॥
आहार चैव कर्मण्यमुपयुञ्जीत नित्यश· ।
[4]सर्वेषा च तत कर्म प्रवृत्ते प्राणधारणम् ॥
अकर्मण्यानि वक्ष्यामि यैर्न तुष्यामि सप्रति ।
राजान्न च न भोक्तव्य मम भक्तै कदाचन ॥
राजान्नेन तु भुक्तेन त्वपराधो महान् भवेत् ।
द्वात्रिशदपराधास्तु न सेवेत मम प्रिये ॥
भोज्यान्नपानाहारेषु ये मया परिकीर्तिता ।
दन्तकाष्ठमखादित्वा यस्तु मामुपसर्पति ॥
द्वितीयमपराध तु धर्मविन्न प्रवर्तते ।
गत्वा मैथुनसङ्ग तु यस्तु मा स्पृशते नर ॥

[1] प्रार्थनानुपपत्ते —क, ख, ग, झ
[2] कृतापराधेन—क, ख, ग, च, झ कोशेषु नास्ति
[3] अपराधानाह— क, ख, ग, च, झ
[4] सर्वे चात्रैव कर्मण्या व्रीहय शालयस्तथा । इति वराहपुराणपाठ

तृतीयमपराध तु कल्पयामि वसुन्धरे ।
दृष्ट्वा तु मृतक देवी यस्तु मामुपसर्पति ॥
चतुर्थमपराध तु न क्षमामि वसुन्धरे ।
स्पृष्ट्वा[1] रजस्वला नारीं यस्तु मामुपसर्पति ॥
पञ्चम त्वपराध च दृष्ट्वा वै न क्षमाम्यहम् ।
स्पृष्ट्वा तु मृतक चैव सस्कार मृतकस्य वै ॥
अपराधमिम षष्ठ न क्षमामि वसुन्धरे ।
ममार्चनविधौ काले वात मुञ्चति निर्घृण ॥
सप्तमश्चापराधोऽय मम देवि न रोचते ।
ममैवार्चनकाले तु पुरीष यस्तु मुञ्चति ॥
अष्टमश्चापराधोऽय ममात्र तु न रोचते ।
मदीयार्चनकाले तु यो हि वाचा प्रभाषते ॥
नवम चापराध तु न क्षमामि वसुन्धरे ।
यस्तु नीलेन वस्त्रेण प्रावृतो मा प्रपश्यति ॥
दशमश्चापराधोऽयं मम देवि न रोचते ।
परिधायैकवस्त्र च यस्तु वै मा प्रपद्यते[2] ॥
एकादशापराधस्तु मम विप्रियकारणम् ।
क्रुद्धस्तु यश्च कर्माणि कुरुते कर्मकारक ॥
द्वादश चापराध तु कल्पयामि वसुन्धरे ।
अकर्मण्यानि पुष्पाणि यस्तु मामुपकल्पयेत् ॥
त्रयोदशापराध तु न क्षमामि वसुन्धरे ।
यस्तु रक्तेन वस्त्रेण कौसुम्भेनाधिगच्छति ॥

[1] दृष्ट्वा—क, ख, ग, च, झ
[2] प्रपश्यति—क, ख, ग, च, झ

चतुर्दशापराधं तु न क्षमामि वसुन्धरे ।
अन्धकारे तु मा देवि य स्पृशेत(त्तु) कदाचन ॥
पञ्चदशापराधं तं कल्पयामि वसुन्धरे ।
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत् ॥
षोडश चापराधं त कल्पयामि न संशय ।
वास मेमवधून्वन् वै यस्तु मय्युपकल्पयेत् ॥
सप्तदशापराधं तं कल्पयामि वसुन्धरे ।
श्वानं स्पृष्ट्वा ममान्यद्वा यो दद्यान्मम माधवि ॥
अष्टादशापराधं त कल्पयामि न सशय ।
वाराहं यस्तु मास वै भक्षयित्वा प्रपद्यते ॥
एकोनविंशापराधं प्रतिजानामि माधवि ।
जालपाद[1] समश्नन् वै यस्तु मामुपसर्पति ॥
अपराध विंशतिम[2] कल्पयामि वसुन्धरे ।
स्पृष्ट्वा वै दीपक यस्तु मोहात् स्पृशति माधवि ॥
एकविंशापराधं तं कल्पयामि वसुन्धरे ।
श्मशानं यस्तु वै गत्वा मम चैवाभिगच्छति ॥
द्वाविंशमपराधं तु तमहं चोपकल्पये ।
पिण्याकं भक्षयित्वा तु मम चैवोपचक्रमेत्[3] ॥
त्रयोविंशापराधं त नरो मम च कल्पयेत् ।
मज्जनानवजानन् यो मा तु पश्यति माधवि ॥
चतुर्विंशापराधं तं कल्पयामि वसुन्धरे ।
एकहस्तप्रणामं च य करोति च भामिनि ॥

[1] जालघात—क, ङ, च
[2] विंशमिम इति चेत् सम्यक्
[3] च कोशादन्यत्र उपचक्रमेत् इति पाठ

पञ्चविंशापराधं तं न क्षमामि वसुन्धरे ।
परप्रापणकेनैव यस्तु मामभिगच्छति ॥
सप्तविंशापराधं तं न क्षमामि वसुन्धरे ।
नवाग्रं ये तु व्रीहीणामदत्वापीह भुञ्जते ॥
अष्टाविंशापराधं तं कल्पयामि वसुन्धरे ।
अदत्वा सुमनो यो वै धूपं मे दातुमिच्छति ॥
एकोनत्रिंशापराधं कल्पयामि वसुन्धरे ।
सोपानत्कस्तु यो मर्त्यो मामेवमुपसर्पति ॥
अपराधमिमं त्रिंशं कल्पयामि वसुन्धरे ।
भेरीमताडयित्वा तु यस्तु मां प्रतिबोधति ॥
एकत्रिंशापराधं तु कल्पयामि वसुन्धरे ।
अजीर्णरसमाविष्टो यस्तु मामुपसर्पति ।
महापराधं तद्विद्याद्द्वात्रिंशमिह चोत्तमम्" ॥ इति ।

एवमेतान्यन्यानि चानर्हतानिमित्तानि परिहरतः, सम्भवे च सानुतापं यथोचितं प्रायश्चित्तमनुतिष्ठत इह समाराधनाधिकारित्वम् ।

**जात्यादिनिबन्धनोऽप्यधिकारविशेषः ।**

एवं जात्यादिनिबन्धनाधिकारविशेषोऽपि शास्त्रेषु श्रूयते । यथोक्तं श्रीसात्त्वते—

"अष्टाङ्गयोगसिद्धानां हृद्यागनिरतात्मनाम् ।
योगिनामधिकारः स्यादेकस्मिन् हृदयेशये ॥
व्यामिश्रयागमुक्तानां विप्राणां वेदवेदिनाम्[1] ।
समन्त्रे तु चतुर्व्यूहे त्वधिकारो[2] न चान्यथा ॥

[1] वेदवादिनाम्—ख, ङ, छ
[2] मन्त्रे तु चातुर्व्यूहे तु अधिकारो—क, ख, ग, च, झ

त्रयाणा क्षत्रियादीना प्रपन्नाना च तत्त्वतः ।
अमन्त्रमधिकारस्तु चातुर्व्यूहक्रियाक्रमे ॥
सक्रिये मन्त्रचक्रे तु वैभवेऽपि विवेकिनाम् ।
ममतासन्निरस्ताना स्वकर्मनिरतात्मनाम् ॥
कर्मवाङ्मनसै सम्यग्भक्ताना परमेश्वरे ।
चतुर्णामधिकारो वै वृत्ते[1] दीक्षाक्रमे सति ॥
एव सप्रतिपन्नाना मन्त्रपूर्वं यथास्थितम् ।
विधानमेकमूर्तीयं समाकर्णय साम्प्रतम् ॥" इति ।

जयादिषु चाप्तादिभेदो द्रष्टव्य· । सर्वेषामन्ततो भगवत्प्राप्ति. समानाविकलानामपि भागवतानाम् * * * * * * *

## [अत्र सर्वेष्वादर्शकोशेषु ग्रन्थांशो लुप्तो विलोक्यते[2] ।]

अथ स्वाध्याय व्याख्यास्याम । चतुर्थे काले सप्राप्ते स्वावगतवेदवाक्यार्थव्यक्तीकरणाय विदितसकलवेद-तदर्थाना स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथात्म्याना मनु-पराशर-पाराशर्य-शुक-शौनकादीना महर्षीणा प्रबन्धान्[3] श्रवण-मनन-जपादिभिरभ्यसेत् । तदिदमुक्तं व्यासेन तत्कालकृत्यम्—"इतिहासपुराणाभ्या वेदं समुपबृंहयेत्" इति । दक्षेण तु "इतिहासपुराणाभ्या षष्ठ सप्तममभ्यसेत्" इति । एवम् "भुक्त्वोपस्थाय चादित्य पुराणानि सदा पठेत्"

**स्वाध्यायविधि ।**

[1] प्राप्ते—क, च, झ

[2] कियान् ग्रन्थाशो लुप्त इति न ज्ञायते

[3] 'महर्षीणा प्रबन्धान्' इति स्थाने 'वेदोपबृहणानि' इति पद—क, ख, ग, च, झ कोशेषु दृश्यते

इत्यादिक च द्रष्टव्यम् ' उपबृहणनिरपेक्षस्य उपबृहणीयवेदभागजप एव युक्त । तत्रापि साक्षाद्भगवत्प्रतिपादक एव भागो जप्य इति श्रीशाण्डिल्यस्मृत्यादिषूक्तम् । संग्रहरुचीना महामन्त्रसक्ताना च सर्वसारभूतव्यापकमन्त्रजपोपदेश ।

जपादिकालेऽपि गुर्वादिषु मौनवर्जन ' सर्वत्रोक्तम् । आह चैव बोधायन·—

**स्वाध्यायमध्ये गुर्वादिपुरस्कार ।**

" जपमध्ये गुरुर्वापि वैष्णवो य समागत ।
सभाषणादिपूजा तु तस्य कृत्वानुमान्य च ॥
अनुश्राव्य तत कुर्याज्जपशेष समाहित " ।
" सर्वस्य प्रभवो यस्माद्विष्णुपादाश्रया नरा ॥
तन्मूलत क्रिया सर्वा सफलास्तु भवन्ति हि ॥ " इति ।

तत्र मौनमन्त्रार्थचिन्तनादयो नियमास्तत्र तत्र ग्राह्या । शिष्य-गुरु-सब्रह्मचारिभि श्रेयोऽर्थिभिरनसूयुभि वीतरागै सह वाद, " बोधयन्त परस्परम् " इत्युक्तसवादोऽपि तत्त्वनिर्णयफलत्वाविशेषात् इतिहास-पुराणादिवत् स्वाध्यायकाल एव प्रवर्तनीय । स्मरन्ति चाभिगमनान्तपातिनि पूर्वयामस्वाध्याये— " जपेदध्यापयेच्छिष्यान् धारयेच्च विचारयेत् " इति । " विचारोऽभ्यसन जप " इति च[1] । उक्त चानुयागविधानानन्तरं श्रीसात्त्वते " समाचम्य पुनर्यायात् प्रयतो भगवद्गृहम् " इत्युक्त्वा,

[1] च कोशादन्यत्र च कारो न विद्यते

" मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुर पादान् शिरस्तत्रैव पञ्चमम्[1] ॥"

इत्यष्टाङ्गप्रणाम[2] च विधाय.

अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो हरे[3] ।
आगमाध्ययन कुर्यात् तद्वाक्यार्थविचारणम्[4] ॥" इति ।

तदिह भगवत्प्रीणन स्वचित्तरञ्जकेतिहास-पुराण-स्तोत्र-निगमान्तद्वय-व्यापक-मन्त्रादीना श्रवण-मनन-प्रवचन-जपादयो वाद-सवादादयश्च यौगिकज्ञान-प्रदीपस्नेहायमाना ,

" पारुष्यमनृत चैव पैशुन्य चैव सर्वश ।
अनिबद्धप्रलापश्च वाङमय स्याच्चतुर्विधम् ॥"

इत्यादिनिदर्शितविविधवाचिकपापोदयप्रतिबन्धिनश्च सर्वे व्यापारा यथासम्भवं संभूय पृथग्भूय वा स्वाध्यायीभवन्ति । शमाद्युपयुक्तशब्दशीलन कुर्यादिति स्वाध्यायसार· । उक्त हि महाभारते—

" यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
सुबद्धमपि शब्देन काकवाशितमेव तत् ॥" इति ।

" न शब्दशास्त्राभिरतस्य मोक्ष " इत्यादि च[5] ।

[1] कूर्मवदित्युत्तरार्ध घ, ङ, छ कोशेषु नास्ति
[2] इत्यादिना साष्टाङ्गप्रणाम—घ, ङ, छ
[3] विभो —घ, ङ, छ
[4] विचारणात—ङ, छ
[5] इति च—क, ख, ग, च

सायसन्ध्यादिकम् ।

अथ लोहितायति भास्करे यथासूत्रं सायसन्ध्योपासनम्, सायहोम, पुनर्यथाशक्ति भगवदभिगमनं[1]हविर्निवेदनपूर्वक भोजनम् । केनचिन्निमित्तेन विलुप्ते भोजने प्राणाग्निहोत्रमन्त्रजप., ततश्च रात्रियोग्यस्वाध्यायो योगश्चेति क्रम । तत्र प्रमाणानि—

"उभे सन्ध्ये भगवानभिगन्तव्य"
"नानिवेद्य हरे किञ्चित् समश्नीयात्तु पावनम्"
"साय प्रातर्द्विजातीनामशन श्रुतिचोदितम् ।
नान्तरा भोजन कुर्यादग्निहोत्रसमो विधि ॥"
"प्राणाग्निहोत्रमन्त्राश्च विलुप्ते भोजने जपेत् ।"
"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत् ।
तत्पूर्वापररात्रेषु युञ्जान" इत्यादीनि ॥

महाप्रदोषे मौनाचरणम् ।

[2]अनन्यप्रयोजनाधिकर्तव्य पूर्वयामस्वाध्यायश्च त्रयोदश्या प्रदोषाख्यकाले[3] वर्जनीय । यथा सगृहीत कालविधाने—

"विषुवायनद्वितयपञ्चदशीप्रथमाष्टमीषु कलिनाथतिथौ ।
रजनीमुखे च मदनाधिपतेर्विधिराह नाध्ययनकर्म नृणाम् ॥"
इति ।

स्मृत्यर्णवे चैतदुपात्तम्—

"मितसन्ध्यस्त्रयोदश्या संस्मरं[4]स्त्वात्मनो हितम् ।
अह्नोऽष्टाशेन सयुक्त रात्र्यर्धं मौनमाचरेत् ॥" इति ।

[1] भगवदभिगमन—क, ख, ग, च, झ
[2] अनन्यप्रयोजनाधिकारिकर्तव्यपूर्वयाम—क, च, झ
[3] कालाशे—घ
[4] त्रयोदश्यामस्मरन्—क, ख, ग, झ, त्रयोदश्याश्च स्मरन्—घ (अत्र घ ङ कोशयो पाठौ अस्पष्टाक्षरा सुतरा सदिग्धौ च)

एव तत्कालनियतसावित्रीहोमादिव्यतिरिक्तदशाया प्रदोषाख्यकाले मौन-विधानात् मन्त्रजपादिकमपि वर्जनीयम् । यथोक्त कृष्णमन्त्रकल्पे — "जपेन्न सन्ध्याकालेषु प्रदोषेष्वशुभेषु च" इति । विषुवायनादिषु तु स्वाध्यायजपमात्रं निषिद्धचते, मन्त्रजपादिकं तु विधीयते । उक्त चाष्टाक्षर-जपस्य नित्यत्व बोधायनेन—

"एव गुरो[1] समारभ्य मन्त्रानुष्ठानमाचरेत् ।
अष्टाक्षर जपेद्विद्वान्नित्यमष्टसहस्रकम् ॥
अजस्वाष्टाक्षर मन्त्र नाहमश्नामि किंचन ।
यावज्जीवं जपामीति पश्चादहरहर्जपेत् ॥
अष्टाक्षरजपो यस्य नित्यो नैमित्तिकोऽपि वा ।
काम्यो वापि भवेत्तस्य नित्या देवार्चना[2] स्मृता" ॥ इति ।

न चात्र मौनविधिकाले भगवद्धर्मविच्छेद· । तदानीं यथाविधि मौनानुष्ठान-स्यैव[3] भगवत्सेवारूपत्वात प्रवृत्तिविषया निवृत्तिविषया वा भगवदाज्ञैव सर्वदानुवर्तनीया इत्यच्छिद्रानुष्ठानसिद्धि । यद्यपि च अतत्क्रियस्य प्रदोषे हरिदर्शनादिक प्रतिषिध्यते तच्चानुपालित परमैकान्तिभिर्भाष्यकारादिभि , तथापि स्वगृहार्चाया[4]स्तत्क्रियत्वात्[5]तदनुज्ञा । उक्तं चैव बोधायनीये पुराण-सारसमुच्चये—

[1] गुरु —घ.

[2] नित्यदेवार्चना—क, ख, च, झ.

[3] यथाविहितमौनानुष्ठानस्यैव—क, ख, ङ, च, छ, झ (अयमेव पाठो यथाशब्द-विहीनो ग कोशेऽपि दृश्यते )

[4] स्वगृहार्चाया इत्यत्र स्वशब्द घ, ङ, छ कोशेषु न दृश्यते

[5] तत्क्रियत्वात् इति बहुषु कोशेषु पाठ , क, झ कोशयो पर तत्क्रियात्वात् इति वर्तते.

"आस्थानस्थ सदा सेव्यो विमानस्थस्तु कालत ।
स्वगृहे सर्वदा सेव्यो मध्यरात्र विना प्रभु " ॥ इति ।

मध्यरात्रेऽप्युपरागादिनिमित्तविशेषसम्भवे स्नानादिपूर्वकभगवत्सेवाजपादिकमवश्यकर्तव्यतया विधीयत इति न विरोध ।

**स्वाध्याय-योगयो अनुयागात् पूर्वमेव समाहृत्यानुष्ठानम् ।**

एतौ च स्वाध्याय-योगौ आह्निकानुयागात् पूर्वमेव केषुचित् संहिताविशेषेषु समाहृत्योपदिश्येते । यथा सगृहीत नारायणमुनिभि —

"पुन प्रणम्य देवेशमह्नो भागे तुरीयके ।
द्विषडष्टषडर्णादिमन्त्रेषु स्वानुसहितम् ॥
विशेषेण जपेन्मन्त्रमष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं वापि यथाशक्ति दशावरम् ॥
गुर्वादींश्च नमस्कृत्य बीजशक्त्यादिक तथा ।
मन्त्रनाथ प्रणम्येशमापादादवलोकयन्[1] ॥
जप्त्वा च सुचिर योगमास्थाय प्रणमेद्धरिम् ।
स्वधाम नीत्वा देवेश[2] प्रह्व सपरिवारकम् ॥
तत्रार्घ्यादिभिरभ्यर्च्य रक्षा कृत्वास्त्रनायकै ।
पुन पुन प्रणम्याथ होमाद्य सविधाय च ।
अनुयाग तत कृत्वा कृतकृत्यो भवेन्नर· " ॥ इति ।

[1] आपादादवलोकयन् इत्यारभ्य स्वधाम नीत्वा देवेश इति यावत् ख, ग कोशयो विसृष्टम्

[2] स्वधा मनसा देवेश इति क कोशे ड कोशस्य शुद्धिपत्रिकाया च दृश्यते.

अयमेव क्रमो विस्तरेणोक्तस्तद्गुरुभिर्वङ्गिवशेश्वरै । तथाहि—

प्राप्तमहश्चतुर्थांशं स्वाध्यायार्थमुदीरितम् ।
विज्ञाप्य विष्णवे तस्मै लब्धानुज्ञस्ततोऽपि च ॥
बाह्यार्थादखिलाच्चेत समाहृत्येन्द्रियै सह ।
जपन्नष्टाक्षरं मन्त्र प्राणायामपुर सरम् ।
प्रयत परया भक्त्या पूर्वमेव समाहित ॥
कराङ्गुलिशरीरेपु न्यासान् कृत्वा यथोदितान् ।
गुरु मन्त्रमृषि छन्दो देवताश्च[1] यथाक्रमम् ॥
शक्ति बीज च शिरसा प्रणमेद्देवमादृत[2] ।
इद गुरुभ्य सर्वेभ्य[3] क्रियते शिरसा नम ॥
मन्त्रज्ञानप्रदातृभ्यस्तद्गुरुभ्योऽपि साप्रतम् ।
नमस्ते मन्त्रराजाय नमस्तेऽष्टाक्षरात्मने ॥
नमस्ते चेतनाधार परब्रह्माभिधायिने ।
स्थित्वान्तर्हृदये सर्वानात्मन सनियच्छते ॥
ऋषयेऽष्टाक्षरस्यान्तर्यामिने हरये नम ।
अष्टाक्षरमहामन्त्रवर्णसख्याभिमानिनीम्[4] ॥
छन्दश्च देवी गायत्री शिरसा प्रणमाम्यहम् ।
मन्त्रशक्ति स्थिता यस्मिन्नाश्रितेष्टार्थदायिनि[5] ॥

[1] ऋषिच्छन्दोदेवताश्च—छ

[2] प्रणमेद्देवमादित —क, झ, प्रणमेदेवमादित —ख, ग, प्रणमेद्देवमादृत —न

[3] गुरुभ्य पूर्वेभ्य —क, च, झ

[4] सख्याभिधायिनीम्—क, ख, च, झ, मुद्रितकारिकापाठश्च

[5] इष्टार्थदायिनि—ख, ग, इष्टार्थदायिनी—च कोशे कारिकायामपि

पदं नारायणायेति शक्ति ता प्रणतोऽस्म्यहम्[1] ।
अकारादुत्थितं बीज वासुदेवाभिधायिन[2] ॥
तद्बीजमस्य प्रभवं प्रणव प्रणतोऽस्म्यहम् ।
[3]मन्त्रस्य देवता चापि परमात्मानमव्ययम् ॥
नारायण परं ब्रह्म नतोऽस्मि शिरसा हरिम् ।
प्रणम्य चैव गुर्वादीन् गन्धाद्यैरभिपूज्य च ॥
अनिशं भगवद्बिम्बमापीठादवलोकयन्[4] ।
जपेदष्टाक्षरं मन्त्र तदर्थमनुचिन्तयन् ॥
अष्टोत्तरसहस्र वा शत वा दश वोत्सुक ।
जपान्ते मनसा ध्यात्वा यथोक्ताकृतिमच्युतम् ॥
सपत्नीक सानुयात्रं सद्वारपगणेश्वरम् ।
कृत्वैवं मनसा योगं सुचिर हृष्टमानस ॥
उत्थाय च ततो योगाद्दण्डवत् प्रणिपत्य च ।
स्तुत्वा च बहुभि स्तोत्रै कृत्वा चापि प्रदक्षिणम् ॥
स्थित्वाग्रे देवदेवस्य कृत्वा मूर्ध्नि स्वमञ्जलिम्[5] ।
तत स्वस्मै प्रपन्नाय[6] दत्ते तेनाभये सति ॥

[1] प्रणमाम्यहम्—कारिकापाठ

[2] वासुदेवाभिधायिनम्—ङ, छ, कारिकायामपि

[3] 'मन्त्रस्य देवता' इत्यारभ्य 'शिरसा हरिम्' इति यावत् एक श्लोक 'मन्त्र शक्तिः' इत्यस्य श्लोकस्य पूर्व क, ख, ग, च, झ कोशेषु पठ्यते

[4] अवलोकयेत्—क, ख, ग च, झ, कारिकायामपि

[5] 'स्वमञ्जलिम्' इत्यनन्तर 'जितन्त इति मन्त्रेण त देव शरण व्रजेत्' इति कारिकाया श्लोकार्धम् अधिक दृश्यते

[6] तस्मै प्रसन्नाय—क, ख, ग, ङ, च, छ, झ, स्वस्मै प्रसन्नाय—घ, स्वस्मै प्रपन्नाय इति तु कारिकापाठ

निर्भय. सर्वभूतेभ्यो भवेन्निर्वृतमानस ।
कर्मण्यवसिते तस्मिन् दुर्लभे दुष्करेऽपि च ॥
अर्घ्यं दत्वा यथापूर्वं स्वमात्मान[1] निवेद्य च ।
स्वनिवेदनमन्त्रेण दासशिष्यात्मजात्मन ॥
सादर. स्वेन[2] शिरसा भक्तिनिघ्न[3] परात्मने ।
निदध्यात् स्वं च कर्तृत्व तस्मिन्नेव परात्मनि ॥
क्षामयेच्चापराधान् स्वान् ज्ञानाज्ञानोपपादितान् ।
असह्यानपि सह्याश्च[4] क्रियमाणानहर्निशम् ॥
अज्ञानतोऽप्यशक्त्या[5] वा आलस्याद्दुष्टभावत· ।
कृतापराध कृपया क्षन्तुमर्हसि मा विभो ॥
अज्ञानादथवा ज्ञानादशुभं यत् कृत मया ।
क्षन्तव्यं तदशेषेण दास्येन च गृहाण माम् ॥
उपचारापदेशेन कृतानहरहर्मया ।
अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ॥
शिरसा प्रार्थितेनैव प्रसन्नेन परात्मना ।
क्षान्तसर्वापचारेण करुणामृतवर्षिणा ॥

[1] स्व चात्मान—क, ख, ग, घ, ङ, च, झ

[2] स्वोदक स्वेन—क, ख, च, झ, सोदक स्वेन—ग, ङ, छ, स्वोकर स्येन—घ, अत्र ‘सादर स्वेन’ इति कारिकापाठ आदृत

[3] भक्तिनिष्ठ —क, ख, च, झ, भक्तियुक्त —ङ, छ, भक्तिनिघ्नपरात्मने—कारिकापाठ

[4] असह्यानविषह्याश्च—क, ख, घ, च, झ, असङ्ख्यानपि सङ्ख्याश्च—ग, असङ्ख्यान-विषह्याश्च—कारिका

[5] अशक्त्या वाप्यालस्यात्—क, च, झ.

वात्सल्यौदार्यसौशील्याद्यनन्तगुणराशिना[1] ॥
अशरण्यशरण्येन कृपया परया स्वया ।
सस्मितालोकमधुरमाहूयाद्भुतया गिरा ॥
दत्त तत्पदयोर्युग्म स्वयमेव स्वमूर्धनि ।
वहस्तच्चरणस्पर्शनिहताशेषकल्मष
आसित्वा सुचिरं तस्य पुरत परया मुदा ।
समुत्थाय ततस्तस्मै भूयो भूय प्रणम्य च ॥
स्मारयित्वा स्वक धाम तद्यानाय प्रणम्य च ।
दत्वाथ पादुकायुग्म तत्र देव समानयेत्[2] ॥
सपत्नीक सानुयात्र सद्वारपगणेश्वरम् ।
ततस्तदर्हविन्यास सूपधान स्वलक्कृतम् ॥
अनन्तभोगशयनमधिरूढे परात्मनि ।
आसीनयोस्तथा[3] देव्योर्देवपार्श्वे यथायथम् ॥
आसीनेषु यथाभागं सेनान्यादिषु सर्वत ।
अथार्घ्यपाद्याचमनताम्बूलादि यथोचितम् ॥
देवाय देवीयुक्ताय सानुगाय निवेद्य च ।
प्रणम्य दण्डवद्भूम्या भूयो भूय पुरो हरे ॥
अनुयागादिक चाथ चिकीर्षन्नाह्निक विधिम् ।
दत्तानुज्ञ परेणापि गमनायात्मनो वहि ॥
निर्गन्तुकामो निक्षिप्य देव दौवारिकादिषु ।
सभय सानुतापश्च चण्डादीन् द्वारपालकान् ॥

[1] गुणशालिना—घ, ङ, छ
[2] समापयेत्—घ, ङ, छ
[3] तदा—क, ख, ग, च, झ

कुमुदादीन् गणेशाश्च चक्रादीन्यायुधान्यपि ।
गरुडं च विशेषेण शेष शेषाशनं तथा ॥
प्रणम्य स्मारयेद्देव सस्नेहादरसाध्वसम्[1] ।
निक्षिपन् जीवितमिव न्यस्यन्निव महानिधिम् ॥
निधित्सन्निव चक्षु स्वमर्पयन्निव कल्पकम् ।
सर्वे भवन्त सगणा सन्नद्धा सर्वदिक्ष्वपि ॥
सावधानाश्च तिष्ठन्तु निक्षिपामि भवत्स्वहम् ।
मम नाथ मम गुरुं पितर मातरं च मे ॥
हरि श्रिय भुव चापि तान् पालयत सर्वत ।
यथानिक्षिप्तरूप मे सन्दर्शयत सर्वदा ॥
भवत शरण गत्वा व्रजामि गतसाध्वस ।
इति विज्ञाप्य तान् पश्चात् प्रार्थयेत हरि गिरा ॥
ननु देव त्वमेवैक सस्थावरचरं जगत् ।
ब्रह्मादिस्थावरान्तं च परिपासि बिभर्षि च ॥
सहरिष्यसि चाप्यन्ते रूपै स्वै स्वैर्यथेप्सितै ।
केन त्व पाल्यसे देव केन वा त्वं विहिस्यसे[2] ॥
अतस्त्वमेव त्वा देव्यौ चण्डादीन् पालकानपि ।
मा च मामकमप्येतत्सर्व गृहमशेषत ॥
पालयित्वा स्वसङ्कल्पमात्रेण मधुसूदन ।
त्वा मया त्वयि निक्षिप्त विश्वस्तेनार्थिकल्पक ॥
आगताय यथाकाल सर्व मे दातुमर्हसि ।

[1] सा‌ध्वस —क, ख, च, झ

[2] विहन्यसे—क च, झ

इति विज्ञाप्य पुरतो दण्डवत् प्रणिपत्य च ॥
होमं पितृक्रियां पश्चादनुयागादिकं च यत् ।
सर्वमावेद्य तेनैव नियुक्तस्तच्चिकीर्षया ॥
वीक्षमाणस्तमेवैनं चक्षुषा स्निग्धपक्ष्मणा ।
मूर्ध्नि न्यस्ताञ्जलिपुटो विनिष्क्रम्य शनैः शनैः ॥
बध्वा कवाटयुगलं रक्षां कृत्वा प्रणम्य च ।
होमाद्यमनुयागान्तं वैधं कर्म समाचरेत् ॥" इति ॥

एवमष्टाङ्गयजनमध्ये स्वाध्याय-योगयोः समाहृत्योपदेशात् तत्तद्देश-कालावस्था-भेदेन यथाक्रमानुष्ठानाशक्तौ इज्यादेरपि यथोचितकालान्तरे समाहरणं रहस्याम्नायादिषु प्रपञ्चितमिहाविरुद्धमिति सूचितम् । स्वाध्याय-योगयोश्च यथावसरं मात्रया सर्वत्रानुप्रवेशः प्रागेव दर्शित इति व्याख्यातः स्वाध्यायः ॥

---

**योगविधिः ।**

अथ योगं व्याख्यास्यामः । तत्र, अनन्यप्रयोजनाधिकर्तव्यो योग-विशेषः 'ईदृशः परमात्मायम्' इत्यादिना श्रीशाण्डिल्यस्मृत्युक्तः प्रागेव दर्शितः । श्रीसात्त्वताद्युपदिष्ट-योगप्रकाराणामविरोधश्च सम्यक् समर्थितः । तत्र भगवान् पराशरस्त्वेवमाह[1]—

"आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥" इति ।

[1] तत्र पराशरस्त्वेवमाह भगवान्—क, ख, ग, झ.

अयमेव त्वनन्यप्रयोजनस्य योग । क्षुद्रयोगान्तराणि तु सिद्ध्यन्तरार्थान्येव योगशास्त्रेषु पठ्यन्ते । यद्यप्यनन्यप्रयोजनस्यापि तत्र तत्रोक्तन्यासविद्या-भेदात्, स्वनिष्ठाविषयतत्तत्सहितोक्तप्रक्रियाभेदाच्च अनुसन्धेयरूप-गुण-विभू-त्यादिकं नाना भवति । तथापि स्वरूपनिरूपकानन्दत्वादिपञ्चकनिरूपित-स्वरूपे सर्वशेषिणि परस्मिन् ब्रह्मणि श्रीमति पुरुषोत्तमे तत्तद्विद्योदित-रूपादिविशेषविशिष्टे मनोवृत्तिनैरन्तर्यरूपत्वं योगस्याविशिष्टम् । अत एव,

"पृथग्भूतेषु दृष्टेषु चतुर्ष्वाश्रमकर्मसु ।
समाधौ योगमेवैक शाण्डिल्य सममुक्तवान् ॥"

इति महाभारतवचनं सुसङ्गतं[1] भवति ।

योगे अनुसन्धेया विषया ।

अत्र तु भाष्यकाराद्युक्तनित्य-गद्य-स्तोत्रादिषु यथानुसन्धानमुक्तं तथैव तत्सम्प्रदायनिष्ठैरनुसन्धेयम् । श्रीवैकुण्ठगद्ये तु[2] अनन्यगते प्रपत्तिमेवा-पवर्गोपायं विधाय, तस्यैव क्षुधितस्यारोगस्य क्षीरान्न-भोजनादिवत्[3] स्वयम्प्रयोजनतयैव ध्यानयोगविशेष तदनुबन्ध्यनुसन्धानविशेषाश्च प्रपञ्चिता । तथा हि— "स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इत्यारभ्य "स्वामि-त्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य" इत्यन्तेन प्राप्य-प्रापकभूतशरण्याध्य-वसायमुक्त्वा, अनन्तरम् "ऐकान्तिकात्यन्तिकपरिचर्यैकमनोरथ" इति पुरुषार्थविशेषलिप्साया अनन्यप्रयोजनता प्रतिपाद्य, "तत्प्राप्तये च तत्पा-दाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वान" इत्यनन्योपायतानुसन्धानमभिधाय, "तस्यैव भगवत." इत्यादिना "महा

[1] वचनमपि सङ्गत—घ

[2] तु शब्द क, ख, ग, ङ कोशेषु नास्ति

[3] क्षीरान्नभोजनवत्—क, ख, ग, च, ङ,

विभूते श्रीमत" इत्यन्तेन शरण्यत्वाद्युपयुक्ताकारानभिधाय, "चरणारविन्दयुगलमनन्यात्मसजीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत्" इति शरणवरणमेव मोक्षोपायत्वेन[1] विधाय, "ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत्" इति स्वतन्त्रप्रपत्तिनिष्ठस्यैव प्रत्यहं [2]प्राणरक्षणार्थभोजनादिन्यायेन आत्मोज्जीवनार्थमनुस्मरणविशेष विधाय, विस्तरेण प्राप्यान्तर्गत परमपद वर्णयित्वा, "महति दिव्ययोगपर्यङ्केऽनन्तभोगिनि श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेष-शेषाशनादिक[3] सर्व परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञापयन्त्या शील-रूप-गुण-विलासादिभिरात्मानुरूपया श्रिया सहासीनम्" इत्यादिना "भगवन्तं नारायण ध्यानयोगेन दृष्ट्वा" इत्यन्तेन परिपूर्णध्यानमुक्त्वा, पुन "भगवत" इत्यारभ्य "भगवत्परिचर्यायामाशा वर्धयित्वा" इत्यन्तेन "मा नयेद्यदि काकुत्स्थस्तत्तस्य सदृश भवेत्", "कदा द्रक्ष्यति मा पति" इत्यादिवत् पुरुषार्थप्राप्तिमनोरथप्रकारान् प्रतिपाद्य, तयैवाशया तत्प्रसादोपबृंहितया भगवदभिगमन दूरात सपरिवारस्य भगवतो नारायणस्य 'समस्तपरिवाराय' इत्यादिना मन्त्रेण प्रणम्य, उत्थाय पुन पुन प्रणाम चाभिधाय, [4]अनन्तरमेवमनुसन्धानमुक्तम्—"अत्यन्तसाध्वस-विनयावनतो भूत्वा भगवत्पार्षदगणनायकैर्द्वारपालकै कृपया स्नेहगर्भया दृशावलोकित सम्यगभिवन्दितस्तैस्तैरेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्वेति याचमान प्रणम्य, आत्मानं भगवते निवेदयेत् । ततो भगवता अमर्यादशीलवता[5] अतिप्रेमान्वितेनाव-

[1] मोक्षोपायत्वेनापि—घ
[2] प्राणरक्षणार्थ इति घ कोशादन्यत्र पाठ
[3] शेष-शेषाशनादिक इति गद्यत्रयपाठ , शेष-शेषाशनादि इति तु सर्वत्रान्यत्र पाठ
[4] अनन्तरमेव—क, झ
[5] अमर्यादाशीलवता—क, ख, ग, च, छ, झ,

लोकनेन सर्वदेश-सर्वकाल-सर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतोऽनुज्ञातश्च अत्यन्तसाध्वसविनयावनत किंकुर्वाण कृताञ्जलिपुटो भगवन्तमुपासीत। ततश्चानुभूयमानभावविशेषो निरतिशयप्रीत्या अन्यत् किंचित् कर्तुं द्रष्टुं स्मर्तुमशक्त पुनरपि शेषभावमेव याचमानो भगवन्तमेवाविच्छिन्नस्रोतोरूपेण अवलोकनेनावलोकयन्नासीत। ततो भगवता स्वयमेवात्मसंजीवनेनावलोकनेनावलोक्य संस्मितमाहूय समस्तक्लेशापह निरतिशयसुखावहमात्मीय श्रीमत्पादारविन्दयुगल शिरसि कृत ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयव सुखमासीत" इति।

अपि चात्र द्वयव्याख्यानरूपे गद्यत्रये निर्वेदभूयस्तया कैङ्कर्यत्वरातिशयाच्च प्राभातिकेऽभिगमने मितगद्यानुसन्धानमुचितम्। बृहद्गद्यं तु समाराधनकाले विशेषतोऽनुसन्धेयाना स्वरूप-रूप गुण-विभूति-देवी-भूषणायुध-परिजन-परिच्छद-द्वारपाल-पार्षदादीना यथावदनुसन्धानहेतुतया[1] "यथावस्थित-स्वरूप-रूप-गुण-विभूति लीलोपकरणविस्तारमनुसन्धाय तमेव शरणमुपगच्छेत् अखिलेत्यादिना" इति समाराधनस्यादौ[2] अन्ते च भाष्यकारैरेव विनियुक्तम्। श्रीवैकुण्ठगद्य तु,

**योगे गद्यत्रयस्य प्रत्येकमुपयोग-विशेष.।**

"यामुनार्यसुधाम्भोधिमवगाह्य यथामति।
आदाय भक्तियोगाख्य रत्न सन्दर्शयाम्यहम्॥"

इति प्रारम्भात्, पश्चादपि 'ध्यानयोगेन दृष्ट्वा' इत्यभिधानात्, फलरूप-विलक्षणानुसन्धानभेदाना विधानात्, "अविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन् आसीत" इति कण्ठोक्तेश्च, योगार्थकल्पिते काले[3] विशेषतोऽनु-

[1] अनुसन्धेयतया—क, ख, ग, झ

[2] समाराधनादौ इति घ कोशादन्यत्र पाठ

[3] योगार्थसङ्कल्पकाले— क, ख, ग, च, झ

सन्धेयमिति भाष्यकाराशय प्रतीयते। न च 'भक्तियोगाख्यं रत्नम्' इति प्रारम्भात् उपायभूतभक्तिविषयोऽयं प्रबन्ध इति भ्रमितव्यम्। अनन्यगतिकस्य प्रपत्तेरेवात्रोपायत्वेनोपदेशात्, उपायभूते फलभूते चानुसन्धानविशेषे भक्तियोगशब्दप्रवृत्त्यविरोधाच्च। तत सिद्धोपायैरप्यय योग स्वकाले निवेशनीय। योगकालानियमादैकाग्र्यानुरूपे कालान्तरेऽपि[1] कदाचिद्भवति। यामिन्या भगवद्ध्यानस्य तु पावनत्वातिशय स्मर्यते—

प्रपन्नानामपि योगानुष्ठानम्।

"उपपातकयुक्तोऽपि महापातकवानपि।
यामिन्या पादमेक तु ब्रह्मध्यानं समाचरेत्" ॥ इति।

योगस्य पञ्चप्रकारभगवद्रूपविषयत्वम्।

ततश्च—

परस्मिन् व्यूहाख्ये विभवनिवहेऽर्चावतरणे
तथान्तर्यन्तर्यप्यजहदधिकारादिनियमा[2]।
निरुद्ध्य स्व चित्त निरवधिमहानन्दजलधौ
निरस्तान्यापेक्षा नयत सफलं कालमखिलम् ॥

एषु च[3] परव्यूहप्रभृतिषु चित्तालम्बनेषु प्रपत्त्येकनिष्ठा नाथमुनिप्रभृतय सुलभतमत्वेन परिपूर्णत्वाविशेषाच्च समाहितचित्तानामप्यनुसन्धेयमर्चावतारमेव चेतस शुभाश्रयमालम्बन्त[4]। तत्र यद्यपि शीघ्रसाक्षात्कारहेतुभूतो

[1] अनुरूपकालान्तरे—क, ख, ग, च, झ
[2] तथाप्यन्तर्यन्तर्यजहत्—क, ख, ग, झ
[3] चकार क, ख, ग, झ कोशेषु नास्ति, ग कोशे एषु इति स्थाने येषु इति पाठ
[4] आलम्बन्ते—च,

योगे प्रपन्नस्य अर्चावतारानुसन्धान मुख्यम् ।

मन्त्रविशेष उच्छिन्नसम्प्रदाय इति वृद्धा विदामासु तथापि स्वावगतैर्मन्त्रविशेषैरमन्त्रकं वा यथासम्भवं यथासम्प्रदाय तदनुसन्धानमस्याप्यवर्जनीयमेव[1] । "सर्वातिशायि षाड्गुण्य सस्थितं मन्त्रबिम्बयो" इत्यादिना तस्य पूर्णत्वं सिद्धम् । श्रीवैखानसेऽपि तदनुसन्धानस्यैव मुख्यत्व प्रतिपादितम् । यथोक्त क्रियाधिकारे—

"मानसी होमपूजा च बेरपूजेति सा त्रिधा"

इत्युपक्रम्य[2]—

"यथोपयोगशक्यत्वात् कर्तु पुष्पादिपूजनम् ।
चक्षुष. प्रीतिकरणान्मनसोऽपि तथैव च[3] ॥
प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरि ।
तस्मात्त्रयाणामेतेषा बेरपूजा विशिष्यते" ॥ इति ।

आह च भगवान् शौनक.—

"सुरूपा प्रतिमा विष्णो प्रसन्नवदनेक्षणाम् ।
कृत्वात्मन प्रीतिकरी सुवर्णरजतादिभि ॥
तामर्चयेत्ता प्रणमेत्ता यजेत्ता विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्" ॥ इति ।

[1] तदनुसन्धानमप्यवर्जनीयमेव—क, ङ, च, छ, ञ, तथानुसन्धानमप्यवर्जनीयमेव—ख, तदनुमत्यापि वर्जनीयमेव—ग

[2] इति प्रक्रम्य—घ, ङ, छ

[3] मनसो हृदयस्य च—इति घ कोशादन्यत्र पाठः

अतो यत्र क्वचित् भगवद्रूपे यथाशक्ति[1] निरन्तरानुसन्धान नाथमुनिप्रभृतिवत् सिद्धोपायैरपि निर्वेशनीयम्[2] ॥

एव तु सात्त्वतोक्त सन्ध्यादिनिद्रान्तकर्मसग्रह —

सात्त्वताद्युक्त साय सन्ध्यादिकम् ।

" प्राप्तेऽथ सन्ध्यासमये स्नात्वाधोजघनावधि[3] ।
क्षालयित्वा तत कुर्याद्वाससा परिवर्तनम् ॥
अर्चयित्वार्घ्यपुष्पाद्यै[4]र्देवमग्निं यजेत्तथा ।
यथाशक्ति जपं कुर्यादासाद्य शयन ततः ॥
समाधाय बहिर्देव निरालम्बपदे स्थितम्[5] ।
अप्रमत्तेन[6] वै तावदनिरुद्धेन चेतसा ।
सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम् " ॥ इति ।

पाद्मे त्वेवमुक्तम्—

" तत पश्चिमसन्ध्याया प्राप्ताया तत्र चोदितम् ।
जपहोमादिकं सर्व कृत्वा परमपूरुषम् ॥
अर्चयित्वा यथान्याय यथापूर्वमशेषत ।

[1] यथाशक्ति—क, ख, ग, झ कोशेषु नास्ति, अत क्वचित् भगवद्रूपनिरन्तरानुसन्धान—ख

[2] निवेशनीयम्—क, ख, ग, झ

[3] स्नात्वा वा जघनावधि—इति घ कोशादन्यत्र पाठ , स्नात्वा च जघनावधि इति ख कोशे

[4] अर्घ्यपूजाद्यै —क, ख, ग, झ

[5] स्थित —ङ, च, छ

[6] अप्रयत्नेन—ग, घ, ङ, छ

भुक्त्वा सविश्य शयने समुत्थाय महानिशि ॥
आचम्य प्रयतो भूत्वा ध्यात्वा परमपूरुषम् ।
योगासने समासीनो युञ्जीतात्मानमात्मनि ॥
यथोक्तेन प्रकारेण यथाशक्ति चतुर्मुख ।
सहारक्रममाश्रित्य तत्त्वान्यात्मनि सहरेत् ॥
आत्मानं चापि हृत्पद्मे परमात्मनि विष्ठिने ।
सहरेदुत्थितो योगात् स्वाप क्लेशापहं व्रजेत् ।
इत्येष कथितो ब्रह्मन् योगकालश्च पञ्चम " ॥ इति ।

न चैतन्निरन्तरंभगवदनुसन्धानं सनकादिसाद्ध्यमस्मदादिभिर्दु-शकमिति मत्वोदासितव्यम् । यथारोग्य भोजनवत यथाशक्ति तदास्वादस्यापरित्याज्यत्वात् । उक्त च[1] श्रीमत्प्रह्लादेन---

योगस्य यथाशक्त्यनुष्ठेयत्वम् ।

"आयास स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरता तमहर्निशम्" ॥ इति ।

अतो यथा वा[2]—

"द्रष्टुमिच्छामि ते रूपमैश्वर परमेश्वर ।
मन्यसे यदि तच्छक्य मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्व दर्शयात्मानमव्ययम्" ॥

इत्येतावद्वादिनोऽर्जुनस्य भगवान् विश्वरूपं स्वात्मानं दर्शयामास, एवमत्रापि स्वानुभवसापेक्षान्[3] यथामनोरथ परमोदारो भगवानेव स्वात्मानमनुभाव-

[1] च शब्दो घ कोशे नास्ति
[2] वा शब्द घ, ङ, छ कोशेषु नास्ति
[3] स्वानुभवसापेक्षाणा—ङ, च, छ, घ कोशोऽत्र शिथिल

यति। अतो निर्यत्नलब्धेन भगवदनुभवानन्दसन्दोहेन कृतार्थोऽस्मीति मन्यमान करण-कलेबरानुगुण्यावधि सुखमासीनो विविध-व्यापारायस्तस्य[1] करिष्यमाणयोगोपकरणभूतस्य करण-वर्गस्य विश्रान्तये स्वयमुपनमन्ती निद्रा न निवारयेत्। 'युक्तस्वप्नावबोधस्य' इति स्मरणात्। निद्रैव तदा कैङ्कर्यम्। सुषुप्तौ च "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" इति शारीरकसूत्रोक्तेन प्रासादखट्वापर्यङ्कन्यायेन[2] नाडीपुरीतद्ब्रह्मसु[3] स्वात्मन शयनमनुसन्धाय, लक्ष्मीपरिष्वङ्गव्यञ्जकेन माधवशब्देन भगवन्तं संकीर्तयन्, "यथा प्रियया संपरिष्वक्त" इत्यारभ्य, "प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किंचन वेद नान्तरम्" इत्याम्नातप्रक्रियया[4] परमात्मपरिष्वङ्ग[5]विशेष च परामृश्य, 'यत्करोषि' इत्यादिप्रस्थानेन निद्रामपि समाराधनत्वेन मन्यमान, संशुद्ध-शुष्कपाद, शास्त्रोक्तप्रकारेण समुचिते स्थाने शास्त्रीये शयनीये चोदित-दिक्छिरा, शुद्धत्वानग्नत्वादिनियमयुक्त[6] श्रीशाण्डिल्यस्मृत्याद्युक्तप्रकारेण स्वाराध्यस्य भगवतश्चरणारविन्दयोर्विन्यस्तशिरस्क, 'शयनासनयानादौ' इत्यादिविधानात् तमेव माधव हृदये[7] ध्यायन् तमेव कीर्तयन् सुख शयीत। यदा यदा च[8] निद्राविच्छेदस्तदा तदा तमेव ध्यायेत्। सकीर्तयेच्च तानि नामानि पुनरानिद्रागमात्। सोऽय प्रदोषप्रभृति-ब्राह्ममुहूर्तावधि[9] सारस्वत-

**भगवत्कैङ्कर्यरूप-निद्रानुभवप्रकार।**

[1] व्यापारायत्तस्य—क, ख, ट, च, छ, ञ, व्यापारायासितस्य—ग
[2] प्रासादखट्वाङ्गपर्यङ्कन्यायेन—ग, प्रसादखट्वापर्यङ्कन्यायेन—च
[3] ब्रह्मणि—ख, ग, घ, ङ, छ
[4] इत्यादिप्रक्रियया—क, ख, ग, च, ञ
[5] परमात्मनि परिष्वङ्ग—इति घ कोशादन्यत्र पाठ
[6] शुद्धत्वादिनियमयुक्त —घ
[7] हृदयेऽपि—घ
[8] च शब्द घ कोशादन्यत्र नास्ति
[9] मुहूर्तपर्यन्त—ङ, छ

स्रोतस[1] इव विश्रमान्तरितस्य योगस्यावसर । अवसरान्तरेऽप्यैकाग्र्यसम्भवे कर्मान्तरसङ्कोचेन स्वीकार्य इति[2] प्रागेवोक्तम् ॥

**पञ्चकालपरस्य सर्वो व्यापार कैङ्कर्यरूप ।**

एव वर्तमानस्य सर्व कालोऽप्यवन्ध्यो भवति । सर्वे व्यापारा कैङ्कर्यरूपा भवन्ति । सर्वोऽप्यानुषङ्गिको भोग क्रीडाशुकक्षीरास्वादन्यायेन स्वामिभोगशेषभूतो भवतीति, भगवत्कैङ्कर्यैकरते परमैकान्तिनोऽनादिमायानिशावसानेऽनन्तमोक्षावसर - प्रारम्भे च प्रत्यूषवदास्थितोऽयमायु शेषकाल इति स चायमौत्सर्गिक क्रम उक्त । अपवादे तु व्युत्क्रमविलोपादिप्रवृत्ति । तथा हि—उपवासदिवसेष्वेकादश्यादिषु अनुयागस्य लोपो भवति । सप्ताङ्गमेव च[3] तदानीं यजनम् । अत एव चानुयागस्यानियतत्वव्यञ्जनाय भाष्यकाराणा तदनुक्ति । तदर्थकालश्च[4] तस्मिन् दिवसे स्वाध्याय-योगादिष्वन्यतमेन यथोचितं यापनीय । कदाचित् द्वादश्यादिषु प्रभाते पारण भवति । तदर्थं पूर्वं यजने[5] कृतेऽपि स्वकालप्राप्त मध्यन्दिनयजनं सप्ताङ्ग तिष्ठति । वैशेषिकार्चनेषु बहुषु एकदिवसे क्रमात् सभवत्सु "अङ्गगुणविरोधे च तादर्थ्यात्" इति न्यायेन उपादानादिप्रवृत्तिर्लेशत. प्रतिरुद्ध्यते । तत्र पूर्वदिवसार्जितैर्द्रव्यै परोपनीतैर्वा तत्तत्क्रियानिष्पत्ति । यजनं च सर्वस्मिन् कालेऽभ्यनुज्ञातम् । खिन्नवृत्तेरन्यपरस्यातुरस्य कलहाद्युपद्रुतस्य च भोजनात्

**पञ्चकालानुष्ठानक्रमस्य क्वचित् अपवाद ।**

[1] स्रोत इव—क, ख, च, झ
[2] स्वीकार्यमिति—ख, ग, घ, ङ, छ
[3] च कार क, ग, च, झ कोशेषु नास्ति
[4] तदर्थ॰ कालश्च—घ, ङ, छ
[5] पूर्वयजने—क, ख, ग, झ

पूर्वं यदाकदाचिल्लब्धेऽवसरे[1] भवति। अत्यन्ताशक्तौ तु ऋत्विक्-पुत्र-शिष्यादिभिः स्वसमैरन्यैः कार्यते। तत्र त्वयमपवादः स्मर्यते—

"विधुरो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
परार्थं कर्म कुर्वाणाः पातयन्ति पतन्ति च" ॥ इति।

ईषच्छक्तौ तु सकुचितयजनम्। एकोपचारमारभ्य तत्तच्छक्त्याद्यनुसारेण सहस्रोपचारान्तविधानात्। 'विषुवायनद्वितयपञ्चदशी' इत्यादिना प्रतिषिद्धेष्ववसरेसु वेदाभ्यासरूपस्वाध्यायो लुप्यते। तदा तत्कालमप्यनन्यपरस्य प्रधानतमो योगः समास्कन्दति। त्रयोदशीनिशामुखे च तस्याप्यपवादं केचिदिच्छन्ति। तदापि सर्वक्रियान्तरनिरोधपूर्वकं मौनव्रतमनुष्ठीयमानं सात्त्विकत्यागप्रक्रियया स्वकीयेन मया स्वप्रीत्यर्थं भगवतैव कार्यत इत्यनुसन्धेयम्। तस्मात् "आलोड्य सर्वशास्त्राणि" इत्यारभ्य "ध्येयो नारायणः सदा" इत्यादिभिरुक्तं भगवदनुस्मरणं सर्वत्र सावकाशम्। अविच्छिन्नस्मृतिसन्ततिरूपत्वादिकं तु मात्रया भज्यते।

**आशौचादिष्वपि भगवत्सकीर्तनादि कार्यम्।**

एवं मृतकसूतकाद्यप्रायत्यकालेष्वपि प्रयतकर्तव्यशास्त्रीयसर्वकर्मविलोपः। तदानीं तु[2] मौनावसरव्यतिरिक्तः कालः सकीर्तनेन स्मरणेन च यापनीयः। 'सततं कीर्तयन्तो माम्', 'तस्मात् सर्वेषु कालेषु', 'मामनुस्मर' इत्यादेस्तदानीं निरपवादत्वात्। प्रत्युत—

"चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत्।
नाशौचं कीर्तने तस्य पवित्रं भगवान् हरिः।
नाशौचं कीर्तने तस्य स्मरणे वापि विद्यते ॥

[1] लब्धावसरे—क, ख, ग, च, ञ
[2] विलोपवत्तदानीं—ख, विलोपात्तदानी—ग.

अशुचिश्चाप्यनाचार सर्वावस्था गतोऽपि[1] वा ।
य स्मरेत् पुण्डरीकाक्ष स बाह्याभ्यान्तर शुचि " ॥

इत्यादिभि कीर्तन-स्मरणयोराशौचकालेऽपि अनुष्ठेयत्वोक्ते । किच,[2]

" सकीर्तयेज्जगन्नाथं वेद वापि समीरयेत् ।
ध्यायन् कृते यजन् यज्ञैस्त्रेताया द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सकीर्त्य केशवम् " ॥

इत्यादिभि देश-कालावस्थाधिकार्याद्यविशेषेण[3] वेदाभ्यास-ध्यान-यजनार्चन[4]-स्थाने तुल्यफलतया सकीर्तनस्य विहितत्वात्, प्रपन्नाभिमतभगवत्प्रीतेश्च तावतैव सुलभत्वाच्च सर्वदेश-सर्वकालाधिकार्याद्यनुगुणं सकीर्तनमेव कर्मान्तर-लोपकाले समुचितम् । विशेषत कलिधर्मत्वाच्च[5] । कलौ युगे प्रयतस्यापि ह्यन्याशक्तस्य तदेव युक्तम् । यथाह भगवान् शौनक —‘ कीर्तनादेव कृष्णस्य मुक्तबन्ध. परं व्रजेत् ’ इति । अत एवाभिगमनस्य न कदाचिदपि लोप । अप्रयतस्यापि दूरावस्थितस्य[6] सकीर्तन-प्रणामाञ्जलिबन्ध-भाषास्तोत्र-लौकिक-वाक्यमात्रपूर्वकप्रपदनैरपि तत्स्वरूपनिष्पत्ते ।

ननु [7]भागवतस्य सदाचार्यसकाशात् सम्यगधिगतवेदान्तस्य ब्रह्म-वित्त्वेन सद्य शौचविधानादनुवृत्ताशौचासिद्धे. कथ कर्मविलोप । मैवम् ।

[1] सर्वावस्थागतोऽपि—घ, ङ, छ

[2] किच इति शब्दो घ कोशे नास्ति

[3] अधिकार्यादिविशेषेण, घ , अधिकार्यादिविशेषेण विहितवेदाभ्यास—ख, ग , अधिकार्याद्यविशेषेण विहित वेदाभ्यास—क, झ.

[4] ध्यानजपार्चन—क, ख, ग, घ, च

[5] कालधर्मत्वाच—क, ख, ग

[6] दूरादवस्थितस्य—घ, ङ, छ

[7] भागवतसदाचार्य—क, ख, छ, झ , भागवतस्य सदाचार्यस्य—घ

रहस्याम्नायनिष्ठानामेव तच्छाखागृह्योक्तप्रक्रियया तदभावात्। मन्त्रसिद्धान्तादिनिष्ठाना तु दीक्षितानामपि प्रकान्तमहोत्सवाधिकारिष्वेव तन्निषेध । यद्यपि ब्रह्मवित्त्वमेनेषामविशिष्ट[1] तथापि कृतादिषु त्रिषु[2] युगेषु तेषामपि सद्यःशौचम्। "वृत्तस्वाध्यायसपन्नस्याघसकोचन तथा" इति घटिका[3]व्यवस्थावचनेन कलियुगे वृत्तादिनिमित्ताघसकोचप्रतिषेधात्। न च वाच्यम्—

ब्रह्मविदामपि आशौचानुष्ठानम्।

"एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वित ।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनै" ॥

इत्यादिषूक्तस्याग्निवेदादिनिमित्तस्याघसंकोचस्याय प्रतिषेध, नतु ब्रह्मवित्त्वनिमित्तस्येति[4]। मैवम्। यथोक्तब्रह्मविदामपि वृत्तगुणशब्देन ग्रहणसम्भवे सकोचकाभावात्। न च ब्रह्मविच्छब्देन प्रव्रजितग्रहणम्। ब्रह्मविदा प्रव्रजिताना च सद्यश्शौचार्हत्वेन[5] पृथगुपादानात्[6]। तर्हि "सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदा तथा" इति सहपठिताना सत्रिप्रभृतीनामपि मत्र-व्रत-ब्रह्मचर्य-दानादिगु[7]णनिमित्तम् अघसंकोचनमिति तेषामप्येतत् अन्तिमयुगे

[1] ब्रह्मवित्त्व तेषामप्यविशिष्ट—क, ख, ग, च, झ, ब्रह्मवित्वमेव तेषामविशिष्ट—ड, छ

[2] त्रिषु शब्द क, च, झ कोशेषु नास्ति

[3] घटिका इति पद क, ख, ग, झ कोशेषु नास्ति

[4] इति शब्द घ, च कोशयो नास्ति

[5] सद्यश्शौचानर्हत्वेन—घ, ड, छ

[6] पृथगुपादानात्। यथोक्तम् मैवम्। ब्रह्मवेदनादीनामपि—ड, छ, ब्रह्मवादिनामपि—घ, पृथगुपादानादिति यथोक्तब्रह्मविदामपि—च अत्र कोशा पाठतो बहुधा भिद्यन्ते। अस्मिस्थले—ख, ग, घ, ड कोशेषु यथोक्त इत्यस्यानन्तर मैवमित्यस्य पूर्व च पङ्क्तिलोपसूचकानि चिह्नानि च दृश्यन्ते। अतो वाक्यार्थो नात्र स्पष्ट

[7] गुण इति पद क, ख, ग, झ कोशेषु नास्ति

न स्यादिति चेन्न,[1] अनुष्ठानतन्तद्व्यवस्थापनात्। अद्यापि हि सद्य·शौचं व्रत्यादिषु शिष्टैरनुष्ठीयते। न शारीरकाधिगम[2]सिद्धब्रह्मवेदनवतामपि गृहस्थाना क्वचित् तथानुष्ठान[3] दृश्यते। अनन्तबाह्यकुदृष्टिसिद्धान्तव्याकुलतत्त्वाध्यवसाये, रागादिदोषान्धकारबहुले, बहुलनिशीथखद्योतवत्स्वल्पगुणलवेऽपि[4] कलिविलुप्तस्वधर्मवर्गेऽस्मिन् काले ब्रह्मविदामसभवादेव तथानुष्ठाना[5]दर्शनमिति चेत्, तर्हि कस्येदानी ब्रह्मविद सद्य शौचेन कर्मलोपं परिजिहीर्षसि।

"कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे।
यस्य चेतसि गोविन्दो हृदये यस्य नाच्युत" ॥

इति न्यायेन य कश्चिद्यत्रक्वचिद्ब्रह्मविदथापि[6] सभवतीति चेत् सत्यम्। स तावत् व्यासागस्त्य-भृगुपति-विभीषणप्रभृतिभिस्त्वयाप्यदृष्टे क्वचित् प्रदेशे वर्तमान स्वान्तरात्मसाक्षिक तथानुतिष्ठतु नाम। तदन्येषा[7] तु भागवतमर्यादा प्रविष्टाना परिपूर्णब्रह्मवित्त्वाभावेऽपि [8]ह्युपनीतावस्थत्वमात्रेण द्विजत्ववत् सस्कार-वेषादियोग[9]मात्रेण भागवतत्वमात्र सिद्धमिति तावन्मात्रवैशिष्ट्य[10]शालिना तन्निबन्धनाघसंकोचे प्रमाण क्वचिन्न पश्याम। अत एव हि[11]

[1] न इति पद क, ख, ग, च, ञ कोशेषु नास्ति
[2] शारीराधिगम इति घ कोशादन्यत्र पाठ
[3] तदनुष्ठान—क, ख, ग, च, ञ
[4] अपि शब्द क, ख, ग, च, ञ कोशेषु न दृश्यते
[5] तदनुष्ठानादर्शन—क, ख, ग, च, ञ
[6] ब्रह्मविदपि—क, ख, ग, च, ञ
[7] अन्येषा—क, ख, ग, च, ञ
[8] हि शब्द —घ, ट, छ कोशेषु नास्ति
[9] सस्कारविशेषादियोग—क, ङ, च, छ, ञ
[10] वैशिष्ट्य—घ कोशादन्यत्र नास्ति
[11] हि घ कोशे नास्ति

तेषामपि पौष्करादिषु आशौचमनुमतम्। यत्तु तत्रत्यसंस्कारविशेषवत कस्यचित् आशौचकालेऽपि मानसयागमात्रमनुमन्यते तत् गायत्रीस्मरणपूर्व-कजलाञ्जलिप्रक्षेपन्यायेन नेतव्यम्। विष्ण्वर्चनमपि हि[1] प्रत्यक्षश्रुतिसिद्ध नित्य चेति प्रागेवोक्तम्। मानसयागमात्राभ्यनुज्ञानेन[2] शेषनिषेधश्च तत्रापि सिद्ध इति।

तदेव स्वत प्राप्तिमपवादप्रकाराश्च[3] यथावदधिगम्याय धर्मोऽनुष्ठेय.।

धर्मानुष्ठानप्रकारस्य दुरूहत्वम्।

"एकं यदि भवेच्छास्त्रं ज्ञान निस्सशयं भवेत।
बहुत्वादिह शास्त्राणा ज्ञानतत्त्व सुदुर्लभम्" ॥

इत्यादिभिर्याथार्थ्येन अतिवितत-गहन-गम्भीर-विविध-विकल्पबहुतरशास्त्रसक्षोभजनितदिङ्मोहशान्तये सर्वै सङ्कलनमात्र[4] त्विह कृतम्। अनेनैव प्रस्थानेन प्रशमितदिङ्मोहै समर्थै· आप्रभातादनुष्ठेयानि सर्वाणि कर्माणि प्रत्येक बहुतरेतिकर्तव्यतामुख्यानुकल्पविकल्पापवादादिविधायकतत्तच्छास्त्रेषु यथावदधिगम्यानुष्ठेयानि। हन्त तर्हि दुर्ज्ञाने दुष्करेऽस्मिन् प्रस्थाने को नाम [5]अद्याधिकारी स्यादिति चेत्, मैवं भेतव्यम्।

भगवत्पूजनस्य नित्यत्व-सुकरत्वादिकम्।

[1] हि शब्द क, च, झ कोशेषु नास्ति

[2] मात्रानुज्ञानेन—क, च, झ

[3] स्वत प्राप्तिमपवादप्रकार च—क, ख, स्वत प्राप्तानपवादप्रकाराश्च—ग, स्वत प्राप्तमपवादप्रकार च—च

[4] शान्तये कलामात्र—ङ, च, छ, शान्तये सर्वै सङ्कलन इति पङ्क्ति घ कोशे "उपनीतान्स्थत्वमात्रेण" इति पूर्वनिर्दिष्टवाक्यस्यानन्तर प्रमादवशाल्लिखिता प्रतिभाति

[5] अद्य इति शब्द क, ग, च, झ कोशेषु नास्ति,

"न विष्ण्वाराधनात् पुण्य विद्यते कर्म वैदिकम् ।
सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधि" ॥

"नित्य विष्ण्वर्चन परम्" इत्यादिभि सर्वोत्तरत्वेन च[1] नित्यत्वेन च श्रुतेऽस्मिन् धर्मे अष्टवर्षस्य ब्रह्मचर्यधर्मे इव यथाकथचिदनुप्रवेशस्यापि[2] युक्तत्वात्,

"स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ।
न हि कल्याणकृत् कश्चिद्दुर्गति तात गच्छति ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते" ॥

इत्यादिन्यायेन[3] भगवतैवाश्रितवत्सलेन शेषपूरणात् । स्मरन्ति च—

"सकृदुच्चरित[4] येन हरिरित्यक्षरद्वयम् ।
बद्ध परिकरस्तेन मोक्षाय गमनं प्रति" ॥
"साङ्केत्य पारिहास्य वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघविनाशनम्" ॥
"सकृत् स्मृतोऽपि गोविन्दो नृणा जन्मशतैश्चितम् ।
पापराशि दहत्याशु तूलराशिमिवानल" ॥
"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावक" ॥
"दुर्गससारकान्तारमपारमभिधावताम् ।
एक कृष्णनमस्कारो मुक्तितीरस्य देशिक." ॥

[1] च शब्द क, ख, ग, च, ञ कोशेषु नास्ति
[2] अपि शब्द क, ख, ग, च, ञ कोशेषु नास्ति
[3] इति न्यायेन—क, ख, च, ञ
[4] सकृदुचारित—घ, ङ, छ.

"एकोऽपि कृष्णे सुकृतप्रणामो दशाश्वमेधावभृथेन तुल्य ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय" ॥
"उपोषित पोषितो वा दुष्टो वा[1] प्रणतोऽपि वा ।
प्रसह्य हरते पाप को न सेवेद्धरि तत" ॥
"को हि भारो[2] हरेर्नाम्नि जिह्वाया[3] परिकीर्तने" ।
"आयास स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ।
पापक्षयश्च भवति स्मरता तमहर्निशम्" ॥
"किं त्वया नार्चितो देव केशव क्लेशनाशन ।
उदकेनाप्यलाभे तु द्रव्याणा पूजित प्रभु" ॥
"अन्यत्पूर्णादपा कुम्भादन्यत्पादावने जनात् ।
अन्यत्कुशलसप्रश्नान्न चेच्छति जनार्दन" ॥
"पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु ।
भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्न" ॥
"पत्र पुष्प फलं तोय यो मे भक्त्या प्रयच्छति ।
तदह भक्त्युपहृतमश्नामि प्रयतात्मन" ॥
"अण्वप्युपहृतं भक्तैर्मम तोषाय[4] कल्पते" ॥ इत्यादि ।

उक्त च नारदीये श्रीमदष्टाक्षरब्रह्मविद्याया षोडशोपचारोक्त्यनन्तरम्—

"एवमष्टाक्षरेणैव सर्वत्रार्चनकर्मणि ।
उपचारानिमान् कुर्वन् भक्तियुक्तेन चेतसा ॥

[1] हृष्टो वा इति छ कोशादन्यत्र पाठ
[2] कोऽतिभार —क, ख, ग, ङ, च, छ, झ
[3] जिह्वया—क, ख, झ
[4] मम भोगाय—ख, ग, घ

तुलसीपद्मपालाशसुवर्णकुसुमैः शुभैः ।
पूजयित्वा जगन्नाथं फलमानन्त्यमश्नुते ॥
गन्धैः पुष्पैः फलैर्मूलैः पत्रैर्वारिभिरेव[1] वा ।
नित्यं भगवतः पूजां यथासम्भवमाचरेत् ॥
समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः ।
साक्षाद्भगवतो विष्णोः पूजनं जन्मनः फलम्" इति ।

एतेन भगवत्पूजनस्य नित्यत्वं सुकरत्वं स्वयंप्रयोजनत्वं च व्यक्तमुक्तम् ।

यत्पुनरिदं विकलसमाराधनादौ प्रत्यवायादिकमुच्यते—

नित्यार्चने वैकल्येऽपि
दोषाभावः ।

"सर्पं दृष्ट्वा यथा कायः[2] कम्पते च मुहुर्मुहुः ।
अमन्त्रमर्चकं दृष्ट्वा तथा भीतो[3] जनार्दनः ॥
गन्धहीने भयोत्पत्तिः पुष्पहीने तु सङ्कुलम् ।
नैवेद्यहीने[4] दुर्भिक्षं मरणं मन्त्रहीनके ॥
अमन्त्रमविधिं चैवमकालं चैव पूजनम् ।
नित्यं राष्ट्रभयं कुर्यात् तद्ग्राम[5] तु विनश्यति ॥
अमन्त्रेणैव यत्पूज्यं पिशाचासुरवर्धनम् ।
व्याधितस्करदोषौ च अनावृष्टिर्महद्भयम्" ॥

[1] फलैः पत्रैर्धूपैर्वारिभिः—क, च, झ
[2] दृष्ट्वा नरः कायः—ख, ग, ङ, छ, दृष्ट्वा महाकायः—घ, दृष्ट्वा यथा कायी—च
[3] महाभीतः—घ
[4] निवेद्यहीने—ख, ग, घ, ङ, छ
[5] ग्रामस्तु इति चेत् साधु

इत्यादि तदेतत् मर्व राज-राष्ट्रादिसमृद्ध्यर्थकाम्याराधनेषु[1] अन्येष्वपि पूर्णानुष्ठानशक्तस्य सपूर्णद्रव्यस्य लोभादिभिस्तत्तद्धानौ मुख्यकल्पसमर्थस्यानुकल्पेन वृत्तौ च[2] दोषमाह। न तु नित्ये कर्मणि[3] निष्कामस्य यथाशक्तिकरणे। स्मरन्ति च मन्वादय —

"वेदोदितं स्वक कर्म नित्य कुर्यादतन्द्रित ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमा गतिम्" ॥ इत्यादि ।

अस्ति चान्यो भगवद्धर्मस्य विशेष, यमधिकृत्याय सात्त्वतसग्रह —

"सकृत् त्र्यह च सप्ताहं पक्ष मासमथापि वा ।
यो यजेद्विधिनानेन भक्तिश्रद्धासमन्वित ॥
सोऽपि यायात् पर स्थान किं पुनर्योऽत्र संस्थित[4] ।
यावज्जीवावधि कालं बद्धकक्षो महामति·" ॥ इति ।

एतदेव सक्षिप्त नारायणमुनिभि·—

"दिनमेकमपि प्रीतो य कुर्यान्मतिमान्नर ।
सुकृती किं पुनर्यावज्जीवमेव समाचरेत्" ॥ इति ।

उक्त चाहिर्बुध्न्येन—

"समाराधयतस्त्वेवमेकाहमपि नारद ।
मुक्ति· करे स्थिता[5] तस्य सर्वे कामाश्च किं पुन·" ॥ इति ।

[1] समृद्ध्यर्थ—क, ख, ग, च, झ
[2] प्रवृत्तौ च—क, ख, ग, च, छ
[3] नित्यकर्मणि—क, च, झ
[4] योगसस्थित —क, ख, झ
[5] करस्थिता—क, ख, ग, च, झ

तदिद फलार्थिविषयम् । अन्येषा तु स्वयप्रयोजनत्वं प्रागेव स्थापितम् । तदभिप्रायेणोक्त वङ्गिवशेश्वरै —

"एवमेकदिन वाथ[1] द्विदिनं त्रिदिन तु वा ।
मास वा वत्सरं वापि यावज्जीवितमेव वा ॥
वर्तेत भक्त्या मया वैष्णव सुचिर सुखम् ।
प्रारब्धे मध्यतो विघ्ने विच्छिन्नेऽप्यत्र कर्मणि ॥
नानर्थो न च नैष्फल्यं न कृताशस्य संक्षय ।
प्रारब्धेष्वसमाप्तेषु विच्छिन्नेष्वन्यकर्मसु ॥
भवत्येवैतदखिलं वैदिकेष्वितरेष्वपि ।
कृतस्वल्पाशकोऽप्यस्य स्थित्वा सुचिरमक्षयम् ॥
त्रायतैव स्वकर्तारं स्वशक्त्या भवभीतित ।
श्रद्धावानधिकार्यस्मिन्नुक्ते कर्मणि[2] वैष्णवे ॥
नापर कुलवृत्तादिगुण कर्तुर्विशेषत·[3] ।
येन केनचिदेषित्रा भाव्यमस्मिस्तु कर्मणि ॥
तस्मिन् सुदुर्लभे लब्धे [4]कृपैवानन्तरक्रिया ।
ज्ञानकर्मतपोयोगयुक्तानप्यधिकारिण ॥
श्रद्धाहानि परो दोषश्च्यावयेदधिकारत ।
स्वोक्तासूपनिषत्स्वेवमुक्तवानुत्तम पुमान् ॥
श्रद्धाश्रद्धे समुद्दिश्य तस्माच्छ्रद्धा परो गुण ।

[1] एकदिन यावत्—क, ख, ग, च, झ
[2] अस्मिन् युक्ते कर्मणि—मुद्रितकारिकाग्रन्थपाठ
[3] कर्तु विशेषत —क, झ, कश्चिद्विशेषत —घ, कर्तृविशेषत —च.
[4] क्रियैव—घ, ङ, च, छ.

नेह कालक्रियाकर्तृद्रव्यदिग्देशसश्रिता[1] ॥
एषितार तदिच्छा वा विहायास्ति नियन्त्रणा ।
निषेधाविषयीभावादृते नैवापरो गुण ॥
प्रीतिहेतु परेशस्य स्वार्चनाङ्गेषु वस्तुषु ।
अत एवार्चनाङ्गानि द्रव्याणि गणयन् स्वयम् ॥
प्राह पत्रादिमात्राणि जातिवर्णादिभिर्विना ।
अहो हरि ब्रुवन्नेव मुक्तिमेत्यप्यहो अहो ॥
अहो अहो सुलभता कृपा चेयमहो अहो ।
अस्त्येव निर्मल तोयमयत्नसुलभं भुवि ॥
दृश्यन्ते च शुभा दूर्वा· सुलभा· सर्वदिक्ष्वपि ।
अस्ति जिह्वा [2]हरि स्तोतुमात्मीयैवास्यमध्यगा ॥
स्वकरावपि कर्मीणौ ध्यातुमस्त्येव मानसम् ।
अतो न हानिर्मन्त्राणा [3]यागविघ्नकरी हरे ॥
सामग्र्येषा हि सम्पूर्णा [4]पत्राद्येकैकमेव तु ।
अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि ॥
प्रायश्चित्त क्षमस्वेति प्रार्थनैकैव केवलम् ।
सत्यसकल्पसंयुक्ते सर्वज्ञे सर्वशक्तिके ॥
नित्यनिर्दोषनि·सीममहाविभव[5]योगिनि ।
स्वाधीनत्रिविधाशेषचिदचिद्वस्तुशेषिणि ॥

[1] सस्थिता—क, ख, ग, झ.

[2] हरि वक्तु—ङ, छ.

[3] योग—ङ, च, छ

[4] वक्त्रादि—मुद्रितकारिकापाठ

[5] महामहिम—ङ, छ

निर्मलानन्तविज्ञाननिधावुदधिशायिनि ।
स्वसकल्पकृताशेषजगज्जन्मलयस्थितौ ॥
अर्चनादिप्वनर्हत्वान्न कश्चिन्नापराध्यति ।
अतोऽनङ्गीकृताशेषकर्तृदोषविमर्शया ॥
कृपयैवास्य देवस्य सर्वोऽप्यर्हति तत्क्रियाम्" ॥ इति ।

अत्र 'तत्क्रियाम्' इति सामान्यनिर्देशात् यथाधिकार साक्षात् समाराधनम्, परैस्तत्प्रवर्तनम्, समाराधनापेक्षितप्रदानेन शिश्रूषणम् इत्यादिकं सर्व संगृहीतम् । उक्तन्यायेन न्यूनाधिकोपचारादिकमपि सर्वमुपपादित मन्तव्यम् ।

अपि च, अप्रयत्नलभ्यैरान्तरपुष्पादिभिरपि भगवदुपासन स्मर्यते—

**भगवदाराधने आन्तरपुष्पादीना मुख्यत्वम् ।**

"अहिसा प्रथम पुष्प पुष्पमिन्द्रियनिग्रह ।
सर्वभूतदया पुष्पं क्षमा पुष्प विशेषत[1] ॥
ज्ञान पुष्प तप पुष्पं ध्यान पुष्प तु सप्तमम् ।
सत्यमेवाष्टम पुष्प तेन तुष्यति केशव " ॥ इति ।

आह च भगवान् शौनक —

"रागाद्यपेत हृदय वागदुष्टानृतादिना ।
हिसादिरहित काय केशवाराधन त्रयम्" ॥ इति ।

[1] पुष्प तथैव च—घ

प्रत्येकं सम्पूर्णसमाराधनमित्यर्थः । अतो यथाधिकारं यथाशक्यमत्र श्रद्दधानैः

पूर्णानुष्ठातुः समाहृत्यानुष्ठातुश्च तुल्यफलत्वम् ।

दयार्द्रहृदयदेशिकोपदेशपूर्वकमनुप्रविश्य देश-काल-द्रव्याद्यानुगुण्येनाच्छिद्रम्, यथाक्रमं समाहृत्य वानुतिष्ठद्भिरनन्यप्रयोजनैः परमैकान्तिभिः अनवधिकपरमपुरुषचरणपरिचरणरूपम्[1] अपवर्गैश्वर्यं यथारोग्यं यथायोग्यं चात्रैव भोक्तव्यमिति सिद्धम् ।

**ग्रन्थोपसंहारः ।**

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरभुजमपरं[2] नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने[3] धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो जनयतु[4] जगतां शर्म वैकुण्ठनाथः[5] ॥

विदितनिगमसीम्ना वेङ्कटेशेन तत्त-
द्बहुसमयसमक्षं बद्धजैत्रध्वजेन ।
प्रतिपदमवधानं पुष्यतां सात्त्वतानां[6]
परिषदि विहितेयं पञ्चकालस्य रक्षा ॥

[1] परिचर्यारूपम्—क, ख, ग, च, झ

[2] सव्येतरमितरभुज—क, ख, ग, च, झ, सव्येतरभुजमितर—ङ, छ

[3] प्रतिभयशमने—घ

[4] वितरतु—ङ, छ

[5] देवीभूषादिजुष्टो नवजलदनिभः पातु दिव्यः परो नः—इत्यस्मिन्नेव ग्रन्थे उपादानविषयस्यावसाने दृश्यमानः पाठः (१३७ पुटे)

[6] सात्त्विकानां—क, ङ, च, छ, झ

कण्डूला [1]कलिकज्जलाविलधिय केचिज्जडा निष्फल
विक्रोशन्तु वियच्चरै सह बलिव्यत्यासवित्रासिभि ।
मोघाशापि तथाविधेष्ववितथेष्वार्येष्वमोघा[2] भृश
मुक्त्यैश्वर्यमहाफलोद्गमधिया चर्येयमाचर्यताम् ॥

त्यक्त शास्त्रमलेपकप्रभृतिभि कि तेन तस्यागत
प्रद्विष्ट जगदेकचक्षुषि दिवाभीतैस्ततस्तस्य किम् ।
दुग्ध पित्तहतैर्जुगुप्सितै[3]मतस्तस्यापि कि दुर्जनै-
स्त्यक्त चेदपि मत्कृतं सुरुचिर कि देशिकैस्त्यज्यते ॥

इति श्रीकवितार्किकसिहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु श्रीपाञ्चरात्ररक्षाया

**नित्यव्याख्यानाख्य**

**तृतीयोऽधिकार ।**

**॥ श्रीपाञ्चरात्ररक्षा संपूर्णा ॥**

॥ श्रीमते निगमान्तमहादेशिकाय नम ॥

---

[1] किल कज्जल—च

[2] आर्तेष्वमोघा—क, च, झ, मोघाशापि इत्यनन्तर ग्रन्थशेष प्रायेण घ कोशे त्रुटित । ङ, छ कोशयोस्तु पङ्क्तिलोपसूचकानि चिह्नानि अत्र दृश्यन्ते

[3] जुगुप्सित इत्यनन्तर ङ, छ कोशयो पङ्क्तिलोपो दृश्यते, ततश्च "मस्तु सति कि तद्देशिकैस्त्यज्यते" इति विषम कोऽपि पाठभेदश्च विद्यते

# श्रीपाञ्चरात्ररक्षायाम्

निर्दिष्टानां ग्रन्थानां ग्रन्थकर्तॄणां च

## वर्णानुक्रमणिका

[अत्र तस्य तस्य ग्रन्थस्य ग्रन्थकर्तुश्च नामसूचकानि कानिचन सङ्केताक्षराणि तत्तन्नाम्न परस्तात् कुण्डलरेखानाम् अन्तरा सन्ति विन्यस्तानि। तान्यनुसृत्य **प्रमाणवचनादीनां वर्णानुक्रमणिकायां** सूचितानां ग्रन्थ ग्रन्थकर्तॄणां नामानि ज्ञातव्यानि। यानि नामानि प्रमाणवचननिर्देशं विनैव ग्रन्थे सूचितानि तेषां नेह सङ्केताक्षराणि सन्ति दत्तानि। अत्र दृश्यमाना सङ्ख्या कोशस्यास्य पुटाङ्कान् निर्दिशन्ति।]

---

# तत्तद्ग्रन्थ-ग्रन्थकर्तृनामनिर्देशकानां सङ्केताक्षराणां विवरणसूची ।

अ—अत्रि
अ को—अमरकोश
अ. ब्र (ना)—अष्टाक्षरब्रह्मविद्या (नारदीया)
अ श्रु—अथर्वणश्रुति
अ सा—अभिगमनसार
अहि—अहिर्बुध्न्यसहिता
आ—आयुर्वेद
आ नि—आचमननिर्णय
आप ध—आपस्तम्बधर्मसूत्रम्
आप श्रौ—आपस्तम्बश्रौतसूत्रम्
आप स्मृ—आपस्तम्बस्मृति
आ प्रा—आगमप्रामाण्यम्
इ स—इतिहाससमुच्चय
ई—ईश्वरसहिता
ऋ—ऋग्वेद, (बह्वृचाम्नाय)
ए—एकायनशाखा
क—कपिल
क व—कठवल्ली
का—कालोत्तरम्
का त—कारणतन्त्रम् (शैवागमः)
कामि—कामिकागम (शैवतन्त्रम्)
का वि—कालविधानम्
कृ क—कृष्णमन्त्रकल्प
क्र—क्रतु
क्रिया वै—क्रियाधिकार (वैखानसे)
गद्य—गद्यत्रयम्
गी स—गीतार्थसङ्ग्रह
गौ ध—गौतमधर्मसूत्रम्
छा—छान्दोग्योपनिषत्
ज स—जयाख्यसहिता
त स—तन्त्रसारसमुच्चय
तै उ—तैत्तरीयोपनिषत्
द—दक्षस्मृति
ना—नारदीयम्
ना मु—नारायणमुनि
नि रा—श्रीरामाानुजनित्यग्रन्थ
न्या वि—न्यायविस्तर
प—पराशर·
प भ—पराशरभट्टारक
प सू—परकालसूरि

पा र—श्रीपाञ्चरात्ररक्षा
पार स—पारमेश्वरसहिता (प्र—प्रतिष्ठा-ध्याय, प्रा—प्रायश्चित्ताध्याय स्व-स्वयव्यक्तनिर्णयाध्याय
पा स—पाद्मसहिता (च—चर्यापाद)
पि—पितामह
पि स्मृ—पितामहस्मृति
पु—पुराणसारसमुच्चय (बो–बोधायनीय)
पू—पूर्वश्रव
पू मी—पूर्वमीमासा
पौ स—पौष्करसहिता
प्र—प्रह्लाद
प्र र—प्रयोगपद्धतिरत्नावली
ब—बलदेवाचार्य
बा—बादरायण
बार्ह—बार्हस्पत्यस्मृति
बो अ—बोधायनीयाष्टाक्षरविधि
बो पु—बोधायनीयपुराणसारसमुच्चय
बो स्मृ—बोधायनस्मृति
भ गी—भगवद्गीता
भ नि—पराशरभट्टस्य नित्यग्रन्थ (भट्टारक)
भृ—भृगु (भृगुसहिता, भार्गवसहिता)
भो—भोजराज
म—मनु
म भा—महाभारतम् (आ—आदि, आश्व-आश्वमेधिकम्, आनु-आनुशासनिकम्, आर—आरण्य, उ-उद्योग, भी—भीष्म, शा—शान्ति, स—सम्भव)
य स—यतिधर्मसमुच्चय
या—श्रीयामुनाचार्य
याज्ञ—याज्ञवल्क्य
यो या—योगयाज्ञवल्क्य
र आ—रहस्याम्नाय
रा—श्रीरामानुज (श्रीभाष्यकार)
रामा—श्रीमद्रामायणम् (अ—अयोध्याकाण्ड, सु—सुन्दरकाण्ड)
व—वङ्गिवशेश्वर, (तस्य कारिका च)
व पु—वराहपुराणम्
वा स्वा—वासुदेवस्वामी
वि—विज्ञानेश्वर
वि ध—विष्णुधर्म. (शौनकीय)
वि पु—श्रीविष्णुपुराणम्
वि स—श्रीविष्णुसहस्रनामस्तोत्रम
वि स्मृ—विष्णुस्मृति
वृ वा—वृद्धवासिष्ठस्मृति
वै—वैखानसम् (वैखानससूत्रम्)
वै ग—वैकुण्ठगद्यम्
वै शा—वैखानसशास्त्रम्
व्या—व्यास (पाराशर्य)
व्या स्मृ—व्यासस्मृति
श ग—शरणागतिगद्यम्
शा मी—शारीरकमीमासा
शा स्मृ—शाण्डिल्यस्मृति
शौ—शौनक
शौ सू—शौनकीयसूत्रम्
श्री कृ—श्रीकृष्णमुनि
श्री ध—श्रीवैष्णवधर्मशास्त्रम्
श्री भा—श्रीभाष्यम्
श्री भाग—श्रीभागवतम्
श्री व—श्रीवत्साङ्कमिश्र

श्रु—श्रुति
श्वे—श्वेताश्वतरोपनिषत्
स—सनक
स स—सङ्कर्षणसहिता
स सि—सवित्सिद्धि
सा स—सात्वतसहिता
स्मृ—स्मृत्यर्णव
ह—हयग्रीवसहिता
ह अ—हर्यष्टकम्
ह व—हरिवश

# श्रीपाञ्चरात्ररक्षानिर्दिष्टानां प्रमाणवचनादीनां वर्णानुक्रमणिका ।

[अस्मिन् ग्रन्थे विद्यमानस्य एकैकस्य च श्लोकार्धस्य, प्रमाणवाक्यस्य च आदिमो भाग समुद्धृतोऽस्याम् अनुक्रमणिकायाम् । तदनन्तर सूचिता नागरसङ्ख्या कोशस्यास्य पुटाङ्कान्, तत परं विन्यस्तानि अक्षराणि तत्तत्प्रमाणग्रन्थान्, तदुपरि विन्यस्ता अराबिक्-सङ्ख्या तत्तत्कोशस्य अध्यायश्लोकादीना च सङ्ख्या क्रमेण निर्दिशन्ति । अत्र निर्दिष्टानि ग्रन्थादिसङ्केताक्षराणि कान् कान् कोशादीन् सूचयन्तीति ग्रन्थ-ग्रन्थकर्तॄणा वर्णानुक्रमणिकाया ज्ञातव्यम् ।]

---

### ऋ



### ए

### गृ



### गो



### ग्र



### घो



### च



### चा



### चि

धृ



ध्य



न

**ना**



**नि**

पा

## पि



## पु



## पू



## पृ



## पौ

फ



ब

## मा

**या**

## यु



## ये



## यो

वी



वृ

### सा



### सि



### सु

सू



से



सो



सौ



स्त



स्थ



स्न



स्प

हि



हु



हृ



हे



हो

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S India)

| | | | Rs | A |
|---|---|---|---|---|
| | **1910** | | | |
| 1 | A PRELIMINARY LIST OF THE SAMSKRT AND PRĀKRT MSS in the Adyar Library (Samskrt-Devanāgarı) | Boards | 1 | 8 |
| | | Cloth | 2 | 0 |
| | **1912** | | | |
| 2 | A DESCRIPTIVE CATALOGUE OF THE SAMSKRT MSS in the Adyar Library *By* F O Schrader Ph D, Vol I, Upanısads | Cloth | 5 | 0 |
| 3 | THE MINOR UPANISADS (Samskrt) critically edited for the Adyar Library *By* F O Schrader Ph D Vol I —Samnyāsa | Cloth | 10 | 0 |
| | **1916** | | | |
| 4 | AHIRBUDHNYA SAMHITA OF THE PĀÑCARĀTRA ĀGAMA (Samskrt) Edited under the supervision of F O Schrader, Ph D 2 Vols | Cloth | 10 | 0 |
| 5 | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAMHITĀ *By* F O Schrader, Ph D | Cloth | 3 | 0 |
| | **1920** | | | |
| 6 | YOGA UPANISADS—20—with the Commentary of Srı Upanısad Brahma Yogın Edited *by* Pandıt A Mahadeva Sastrı B A | | 5 | 0 |
| | **1921** | | | |
| 7 | SĀMĀNYA VEDĀNTA UPANISADS—24—with the commentary of Srı Upanısad Brahma Yogın Edited *by* Pandıt A Mahadeva Sastrı B A | | 5 | 0 |
| | **1923** | | | |
| 8 | VAISNAVA UPANISADS—14—with the Commentary of Srı Upanısad Brahma Yogın Edited *by* Pandıt A Mahadeva Sastrı, B A | | 4 | 0 |
| | **1925** | | | |
| 9 | SAIVA UPANISADS—15—with the Commentary of S'rı Upanısad Brahma Yogın Edited *by* A Mahadeva Sastrı B A | | 3 | 0 |
| 10 | S'ĀKTA UPANISADS—8—with the Commentary of Srı Upanısad Brahma Yogın Edited *by* Pandıt A Mahadeva Sastrı B A | | 2 | 8 |
| | **1926** | | | |
| 11 | CATALOGUE OF SAMSKRT MSS in the Adyar Lıbrary (revised) Edited *by* the Pandıts of the Adyar Lıbrary under the dırection of Prof C Kunhan Raja M A, D Phıl (Oxon ), 2 Vols | Each | 3 | 12 |
| | **1929** | | | |
| 12 | SAMNYĀSA UPANISADS—17—with the Commentary of Srı Upanısad Brahma Yogın Edited *by* T R Chıntamanı M A, and the Pandıts of the Adyar Lıbrary under the dırection of Prof C Kunhan Raja M A D Phıl (Oxon ) | | 4 | 0 |
| 13 | RUKMINI KALYĀNA MAHĀ KĀVYA by Rājacūdāmaṇı Dıksıta Edited *by* the Pandıts of the Adyar Lıbrary and Mr T R Chıntamanı M A under the dırection of Prof C Kunhan Raja, M A, D Phıl (Oxon ) | | 2 | 0 |
| | **1933** | | | |
| 14 | UNPUBLISHED MINOR UPANISADS with the Commentary of S'rı Upanısad Brahma Yogın Edited *by* the Pandıts of the Adyar Lıbrary, under the dırection of Prof C Kunhan Raja M A D Phıl (Oxon ) | | 5 | 0 |

## 1936

Rs. A.

15. TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.)
    - Is'a to Aitareya, Vol. I ... 4 8
    - Chāndogya and Bṛhadāraṇyaka, Vol. II ... 6 0
    - Vol. I Boards, Vol. II ,, ... 9 8

## 1937

16. MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 2 0

## 1938

17. SAṂGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. with a critical Introduction in English *by* T. R. Srinivasa Aiyangar, B.A., L.T. ... 5 0
18. PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker, M.A., Ph.D. ; Text edited *by* the Staff of the Adyar Library under the direction of Dr. G. Srinivasa Murti, B.A., B.L., M.B.& C.M., Vaidyaratna, Hon. Director, Adyar Library. ... 3 0
19. BHAVASAÑKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṂKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri, Tirupati. ... 2 4
20. YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 5 0
21. * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga, M.A., I.E.S. (Retd.)
    - Part 1. Nature—From Macrocosm to Microcosm ... 1 14
    - Part 2. Man—From Atom to Man ... 1 14
    - Part 3. God—From Humanity to Divinity ... 2 4
    - Part 4. Some Practical Applications ... 2 4

## 1939

22. ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) Vol. I. ... 6 0

## 1940

23. THE NUMBER OF RASAS. *By* V. Raghavan, M.A., Ph. D., Department of Saṃskṛt, University of Madras, with a Foreword by Prof. M. Hiriyanna, M.A., formerly Professor of Saṃskṛt Maharajah's College, Mysore ... 3 0

## 1941

24. SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... 5 0
25. BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṃskṛt). Edited *by* the Paṇḍits of the Adyar Library with an Introduction by Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.) ... 4 0
26. SĀMAVEDA-SAṂHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... 6 0

** Published under the auspices of the Adyar Library Association.*

| | | Rs | A |
|---|---|---|---|
| 27 | RĀJA DHARMA (Dewan Bahadur K Krishnaswami Rao Lectures 1938 University of Madras) *by* Rao Bahadur K V Rangaswami Aiyangar M A | 3 | 8 |
| 28 | VARIVASYĀRAHASYAM of Bhāsurānandanātha (2nd Edition) by Pandit S Subrahmanya Sastri F T S (with English Translation) | 2 | 8 |
| 29 | VYAVAHĀRANIRNAYA OF VARADARĀJA—Edited *by* Rao Bahadur K V Rangaswami Aiyangar M A and A N Krishna Aiyangar M A L T Adyar Library with a FOREWORD *by* Sir P S Sivaswamy Aiyer K C S I C I E LL D | | |
| 30 | SAMGITARATNĀKARA—With the Commentaries of Catura Kallinātha and Simhabhūpāla Edited *by* Pandit S Subrahmanya Sastri F T S Vol I | | |
| | **1942** | | |
| 31 | CATALOGUE OF THE ADYAR LIBRARY Western Section part 1—prepared under the direction of Bhikshu Arya Asanga Jt Director and Curator Western Section Adyar Library | 5 | 0 |
| 32 | ĀLAMBANAPARIKSĀ AND VRTTI *by* Dinnāga with English translation Tibetan text etc by Pandit N Aiyaswami Sastri Tirupati | 3 | 8 |
| 33 | SOME CONCEPTS OF ALANKĀRA SĀSTRA *by* V Raghavan M A Ph D University of Madras | 4 | 0 |
| 34 | VEDĀNTAPARIBHĀSĀ—with English translation and Notes *by* Prof S S Suryanarayana Sastri M A B Sc (Oxon) Bar at Law Reader Head of the Department of Philosophy University of Madras | 2 | 12 |
| 35 | A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K Madhava Krishna Sarma M O L under the direction of Prof C Kunhan Raja M A D Phil (Oxon) Vol I—Vedic | 15 | 0 |
| 36 | SRI PĀÑCARĀTRA RAKSĀ of Sri Vedānta Des'ika—Edited *by* Vaidyaratna Pandit M Duraiswami Aiyangar and Vedānta Siromaṇi T Venugopalacharya with an Introduction in English by G Srinivasa Murti, Hon Director, Adyar Library | 4 | 8 |
| 37 | CATALOGUE OF THE ADYAR LIBRARY Western Section part 2 prepared under the direction of Bhikshu Arya Asanga Jt Director and Curator Western Section | | |
| 38 | CATURDAS'ALAKSANI OF GADĀDHARA with three commentaries—Edited *by* Pandit N Santanam Aiyar Vol I | 4 | 8 |

## PAMPHLETS

### 1939

| | Rs | A |
|---|---|---|
| A VARIANT VERSION OF THE EKĀGNIKĀNDA (Reprinted from the Adyar Library Bulletin October 1939) Edited *by* K Madhava Krishna Sarma M O L | 0 | 3 |
| **1940** | | |
| THE RĀJAMRGĀNKA OF BHOJA (Reprinted from the Adyar Library Bulletin October 1940) Edited *by* K Madhava Krishna Sarma M O L | 0 | 4 |
| **1942** | | |
| THE SAT PAÑCĀS'IKĀ, a Silpas'āstra manual (Reprinted from the Adyar Library Bulletin February 1942) Edited *by* K Madhava Krishna Sarma M O L | 0 | 5 |
| THE PRAMĀNAMAÑJARI OF SARVADEVA (Reprinted from the Adyar Library Bulletin, May, 1942) Edited *by* K Madhava Krishna Sarma, M O L | 0 | 6 |
| THE PATH OF GREATNESS (Reprinted from the Adyar Library Bulletin, December 1942), *by* Dr G S Arundale, M A, D Litt | | |

## IN THE PRESS

1 ĀS'VALĀYANAGRHYA SŪTRA—With Devasvāmi Bhāsya—Edited by Swami Ravi Tirtha
2 ĀSVALĀYANAGRHYA SŪTRA (Bhāsya of Devasvāmi) Translated into English *by* A N Krishna Aiyangar M A L T , Adyar Library
3 JIVĀNANDANAM OF ĀNANDARĀYAMAKHI with a Commentary by Vaidyaratna Pandit M Duraiswami Aiyangar Edited *by* Vaidvaratna G Srinivasa Murti B A B L , M B & C M and Vaidyaratna Pandit M Duraiswami Aiyangar
4 VAISNAVA UPANISADS—Translated into English *by* T R Srinivasa Aiyangar B A L T and Dr G Srinivasa Murti, Hon Director, Adyar Library
5 USĀNIRUDDHO of Rāma Pānivāda Edited *by* Pandit S Subrahmanya Sastri F T S and Prof C Kunhan Raja M A D Phil (Oxon )
6 NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Swami Ravi Tirtha
7 THE ĀPASTAMBASMRTI—Edited *by* A N Krishna Aiyangar M A , L T , Adyar Library
8 THE ACYUTARĀYĀBHYUDAYAM of Rājanātha Dindima—Sargas 7 to 12—*by* A N Krishna Aiyangar M A L T , Adyar Library
9 PHILOSOPHY OF VISISTĀDVAITA *by* Prof P N Srinivasachari M A Retired Principal Pachaiyappa s College Madras
10 GAUTAMASMRTI—Edited *by* A N Krishna Aiyangar M A , L T Adyar Library
11 KĀLĀDARSA OF ĀDITYA BHATTA—Edited *by* Rao Bahadur K V Rangaswami Aiyangar M A , and A N Krishna Aiyangar, M A , L T Adyar Library
12 PAKSATĀ OF GADĀDHARA—with four commentaries *by* Pandit N Santanam Aiyar
13 BRHATJĀTAKA—with the commentary Apūrvārthadars'ini *by* A N Srinivasaraghava Aiyangar, M A L T
14 VISNUSMRTI—With the Kes'ava Vaijayanti of Nanda Pandita Edited *by* Rao Bahadur K V Rangaswami Aiyangar, M A , and A N Krishna Aiyangar M A L T , Adyar Library
15 CATURDASALAKSANI OF GADĀDHARA with three commentaries Vol II and III *by* Pandit N Santanam Aiyar

---

## WORKS UNDER PREPARATION

1 AVAYAVA OF GADĀDHARA—with commentaries *by* Pandit N Santanam Aiyar
2 VRTTARATNĀVALI—with commentary English Translation and Notes *by* H G Narahari M A , Adyar Library
3 SIDDHĀNTALAKSANAM OF GADĀDHARA with commentaries Edited *by* Pandit N Santanam Aiyar
4 SĀMĀNYANIRUKTI OF GADĀDHARA with commentrries Edited *by* Pandit N Santanam Aiyar
5 VYUTPATTIVĀDA OF GADĀDHARA with commentaries Edited *by* Pandit N Santanam Aiyar

*Agents for our publications*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, S India**